॥ श्रीः ॥

# ॥ श्रीदेशिकाष्टकम् ॥

# ஸ்ரீ தேசிகாஷ்டகம்

ஸம்ஸ்கிருதத்தில் வியாக்யானத்துடனும்
ஸ்ரீ சங்கரவிஜய கதையுடனும்
கூடியது.

கிருஷ்ணராஜபுரம்
**ஸ்ரீ சங்கர தீக்ஷிதரால்**
இயற்றப்பட்டது.

ஸ்ரீரங்கம், ஸ்ரீ சங்கரகுருகுலம்
**ஸ்ரீ வெங்கடராம சாஸ்திரிகள்**
எழுதிய
தமிழ் அநுவாதத்துடன் கூடியது.

1955 விலை ரூ. 1—8—0

॥ श्रीः ॥

# SRI DESIKASHTAKAM

# ॥ श्रीदेशिकाष्टकम् ॥

सव्याख्यम् भूमिकासहितम् ।

श्रीशंकरविजयकथासयुतम् ।

कृष्णराजपुरम् श्रीशंकरदीक्षितैः प्रणीतम् ।

महादानपुरं श्रीभाष्यस्वामिभिरनुगृहीत

भूमिकासंयुतम् ।

with a Foreword by

R. KRISHNASWAMI AIYAR, M. A., B. L.,

Translated into Tamil by

K. S. VENKATARAMA SASTRIGAL

Sri Sankaragurukulam,

Srirangam.

SRI VANI VILAS PRESS,

SRIRANGAM.

1955

Price Re. 1-8-0

# விஞ்ஞாபனம்

ஆஸ்திக மஹாசயர்களே,

உலக முன்னேற்றத்திற்கு ஸ்ரீ ஸத்குரு கிருபையே மூலகாரணமென்பது யாவரும் அறிந்த விஷயமே. தேசிகாஷ்டகம் என்னும் இந்நூல் ஸ்ரீ ஸத்குரு கிருபையின் அழகிய வடிவமேயாகுமென இதைப்படிக்கப் படிக்க யாவரும் தானாகவே உணரக்கூடும். ஆகவே இந்நூல் உலகத்தின் பாக்யப் பெருக்கால் வெளிவந்ததென்றே கருதவேண்டும். அதனால் உலகமுன்னேற்றத்திற்காக முன்வந்த உங்கள் அதீனமேதான் இந்நூலின் முன்னேற்றமுமென்பது உரைக்காமலே உணரக்கூடும். அதுகொண்டு இந்நூலை அடிமுதல் நுனிவரையில் நன்கு படித்து ஸாராஸாரத்தை நன்கு பரிசீலனம் பண்ணி இதன் முன்னேற்றத்திற்கான உபாயத்தை ஆலோசித்து தாங்கள் கையாள்வதுடன் எனக்கும் தெரிவிக்கக் கோருகிறேன்.

ஆசிரியர்.

श्रीमत्परमहंसपरिव्राजक-

**श्रीसच्चिदानन्दतीर्थस्वामिभिः** प्रणीता ।

## ॥ भूमिका ॥

अयि मान्याः ! समृद्धसौजन्याः ! पण्डितमूर्धन्याः ! इह खलु महता पुण्यपुंजेन, महीयसा तपःपरिपाकेन, बंहीयसा भगवत्कृपातिशयेन च भारतभूपरिसरे लब्धजनुषां वैदिकवर्त्मजुषां, विशेषतश्च अद्वैतिकुले प्राप्तवपुषां समेषामस्माकं अवश्यकर्तव्यमिदं अवसरप्राप्तं च कर्म; यत्किल परमोपकारिणां श्रीभगवत्पादानां निरन्तरस्मरणपूर्वकं तत्प्रणीतभाष्यग्रन्थानां असकृत् परिशीलनेन अनुदिनमनुसवनमनुक्षणमपि भाष्यार्थानुसन्धानेनैव कालयापनं नाम ॥

तत्र अनधिकारिणां तु तत्प्रणीतप्रकरणग्रन्थव्यासंगेन, तत्राप्यशक्तानां शिवविष्ण्वादिमूर्तिपारम्यवर्णनपरस्तोत्रजातपठनेन, तत्राप्यक्षमाणां भजगोविन्दादिगीतावलीगानेन वा, प्रत्यहं भगवत्पादानां सकृद्वा स्मरणमनिवार्यमतिश्रेयस्करं च कार्यमिति न खल्विदमविदितमावेदनीयम् । तदभावे तु सर्वथा वयं कृतघ्ना एव नूनं भवेम ॥

भगवत्पादप्रणीतदेवतास्तोत्रपाठवदेव भगवत्पादविषयकस्तोत्रपाठोऽपि सर्वाभ्युदयनिःश्रेयसकारणतां प्रतिपद्यते इत्यत्रापि नास्ति विप्रतिपत्तिः । तत्रापि तदीयावतारादिसमग्रचरितसंग्राहकस्तोत्रपठनस्य तु वैशिष्ट्यं अवचनसिद्धमेव ॥

प्रकृते च अखण्डकावेरजातटविराजमानकृष्णरायपुरवास्तव्यैः आहिताग्निप्रवरैः श्रीशंकरदीक्षितेन्द्रैः शृंगगिरिश्रीजगद्गुरूणां स्वप्नसन्निहितानां सकरुणया प्रेरणया आज्ञया वा देशिकाष्टकमिदं निरमायि ।

बह्वर्थसंग्राहकाणां पद्यानामेषां माधुर्यादिगुणगरिमा अन्यादृश एवेति सुधीजनाः स्वयमेव अनुभवितुं प्रभवन्तीति नात्र विषये वयं लेखनीं प्रसारयामः ।

देशिकाष्टकस्यास्य परमगंभीरत्वादेव तदर्थाविष्करणाय तत्प्रणीतव्याख्यापि मूलेन साकं समयोजि ।

सर्वथाऽयं ग्रन्थः भगवत्पादभक्तस्य एकैकस्यापि गृहे गृहे सांनिध्यं प्राप्नुयादिति सुदृढं विश्वसिमः ।

आशास्महे च प्रकृतग्रन्थपठनेन भगवत्पादीयाः सर्वे सफलीकृतपुण्यजन्मानो भूयासुरिति सर्वतः शिवम् ॥

मन्मथवत्सरीय
आश्वयुजकृष्णत्रयोदश्याम् ।

**श्री भाष्यस्वामी**
मोकाम् — महादानपुरम् ।

## FOREWORD.

I deem it a great honour and privilege to write a short Foreword to the DESIKASHTAKA of Brahmasri SANKARA DIKSHITAR of Krishnarajapuram. I have known him from his student days at Kaladi. His unostentatious and deeply religious life in the midst of the stress of modern conditions is proof positive of what intense faith in God and in his divine commands can do even in these days of exceptionally adverse circumstances. It is no matter for surprise therefore that he has always had in abundance the gracious blessings of His Holiness the late Acharya of Sringeri.

Brahmasri Dikshitar was ever content with his daily duties as an Agnihotri and would not care even to expound the Vedanta for he was too shy to pose as a teacher to anybody. It was really a surprise to him when, during the early hours of a morning on his way to the river for bathing, some words kept ringing in his ears and vibrating in his tongue and, before he returned from the river, he found some eight slokas ready made for him and his bewilderment was no less than that of Valmiki on the banks of Tamasa

when his sorrow found expression and shape in the form of a verse the primary fountain of the immortal Srimad Ramayana. He wrote the verses down and found in them summary ot the life of Sri Sankaracharya. The more and more he contemplated upon them, the more and more flashed upon him the significances of each word. As he claimed no originality for this composition and believed them to be God-sent for the benefit of the world, he immediately had them printed in the form of a small pamphlet adding a Tamil translation thereto.

As the language of the slokas is somewhat stiff, an explanatory commentary was deemed necessary, particularly correlating the ideas here with the incidents in Sankara Dig Vijaya. The result is the present publication. Brahmasri K S. Venkatarama Sastrigal of Sri Sankara Gurukulam, Srirangam, has been kind enough to include here a rough but fairly full paraphrase of the commentary in Tamil for the benefit of those unacquainted with Sanskrit. Apart from the depths of meaning which the slokas disclose when read intensively, the mere repetition of the slokas by themselves daily, even without knowing their meanings, is bound to be of great spiritual benefit.

Brahmasri Dikshitar has prefixed to this publication an introduction quite characteristic of his method of exposition and I think it proper to reproduce here a few of the thoughts contained there. The world in general (and our body in particular) is really a prison where we have to undergo not only punishment for past misdeeds but also to undergo training and correction to save us from future misdeeds. The prison is not intended as a permanent residence; the ultimate aim of the prisoner ought to be to walk out of it pure and free. Hard work may be the lot of criminals and some amenities may be given to civil debtors but both of them are only prisoners. When we are in it, we must try our best to earn the good grace of the authorities, conform to the rules and discipline of the institution and merit by our conduct an early release from it. It may be compared aslo to a hospital where we are housed for the time as inpatients. We must abide by the instructions of the doctor, conform to his diet regulations, accept his medicines sweet or bitter as they may be, and get cured as early as possible so that we may walk out of the hospital healthy and care-free. Similarly we must conform to the dictates of God, the superintendent

of the worlds and the doctor par excellence, and by implicit obedience to Him earn His graces and His certificate of discharge. It is not always that the prisoners or the patients have direct contact with the head of the institution but it must be remembered that the warders or the nurses attend on them not on their own initiative but only on the instructions of and on the authority of that head. Similarly with those of us who are unable to have contact with God direct, His representatives the Acharyas listen and attend to our needs and help us towards an early discharge. Our faith in them must be equally sincere and deep-seated. It is our earnest hope that a perusal of this short but inspired Stotra will infuse and strengthen such faith in its readers.

**R. Krishnaswami Aiyar,**

27—5—'55 **Retired Advocate, Tirunelveli.**

॥ श्रीमहागणपतये नमः ॥

॥ श्रीरामजयम् ॥

# ॥ भूमिका ॥

गुरवे सर्वलोकानां भिषजे भवरोगिणाम् ।
निधये सर्वविद्यानां दक्षिणामूर्तये नमः ॥
गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः ।
गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः ॥

अयि भो आस्तिकमहाशयाः! इह खलु लोके वयं सार्वदिकमभयं सुखं च प्रार्थयन्तस्तदर्थं प्रयतामहे! न च प्रयत्नफलं प्राप्नुमः ; न वा प्रयत्नात् विरमामः ; न च कंचिदपि पुरुषं सर्वथा दुःखरहितं भयरहितं वा पश्यामः । किमत्र कारणमिति विचार्यमाणे सति, 'प्रपञ्चे सर्वमपि वस्तुजातं सर्वत्र सर्वदा येन केन प्रकारेण दुःखभयान्यतरपर्यवसायिव्यवहारोपयोग्येव वर्तते' इति निश्चितं भवति । तथाहि — यद्वस्तु यस्मिन्काले सुखसाधनं भाति तदेव कालान्तरे दुःखसाधनं भवति । यथा शीतोष्णादि । तत्कालेऽपि तद्वस्तु देशान्तरे दुःखसाधनम् । यथा तदेव शीतोष्णादि । तत्काले तद्देशेऽपि च प्रकारभेदेन दुःखसाधनम्; तद्यथा — धनकनकादिकं भोगकीर्त्यादिसाधनत्वेन सुखं, रक्षणीयत्वेन आर्जनीयत्वादिना च दुःखं च प्रयच्छति । एवमेव भयसाधनत्वमपि वस्तु-

ज्ञानस्य वर्तते । तद्यथा — 'अतिस्नेहः पापशङ्की' इति न्यायेन यत् अतिप्रेमास्पदं तत् अपायभीजनकम् । 'अतिद्वेषो द्रोहशंकी' इति न्यायेन यत् अतिद्वेषास्पदम्, तत् द्रोहभीजनकम् । यत् तटस्थं तदपि कालान्तरे एतदन्यतरान्तःपाति भवितुमर्हति । एतदुभयमपि कदाचित् तटस्थं भवितुमर्हति । अतः किं वस्तु कदा केन प्रकारेण प्रेयो, द्वेष्यं वा, तटस्थं वा भवेदिति अनिश्चितम् । अतस्सिद्धं भयसाधनत्वं वस्तुज्ञानस्य ॥

तथा वस्तूनां सुखसाधनत्वमपि अनियतम् । तद्यथा— प्रियस्य लाभः सुखाय, अप्रियस्य लाभो दुःखाय । प्रियाप्रिये च अनियते । अतश्च सिद्धं सर्वमपि वस्तुज्ञानं पूर्वोक्तरीत्या दुःखभयान्यतरपर्यवसायित्व्यवहारोपयोग्येवेति । एतेन इहलोकवासः कारागृहवासतुल्य इति प्रतीयते । यतः तत्रत्यनियमनिर्बन्धादिकं सर्वमपि दुःखभयान्यतरोत्पादकमेव विवेकिनाम् । इहापि तथैवेत्युपपादितम् ॥

किंच कृतापराधानां तदपराधफलानुभवाय 'इतः परमत्र यथा न प्रविशेम तथा वर्तितव्यं' इति बुद्ध्युत्पादनाय च यथा कारागृहे प्रवेशनं, तथैव इहलोके अस्माकं मनुष्यादिजन्मरूपेण प्रवेशनमपि, पूर्वकृतसुकृतदुष्कृतकर्मणां फलानुभवाय 'इतः परमिहलोके जन्मादिकं यथा न प्राप्नुयाम, तथा शास्त्रीयसाधुमार्गावलम्बनेन वर्तितव्यं' इति बुद्ध्युत्पादनाय च । यद्यपि गर्भस्थदशायामस्माकमेतादृशी बुद्धिः संजातैव ; परन्तु भूस्पर्शनानन्तरं मायाप्रभावात् नानुवर्तते । अतोऽपि कारागृहवासतुल्यत्वं इहलोकवासस्य ॥

तथा अस्मदनुभवेनापि सर्वो व्यवहारः तादृशबुद्ध्युत्पादनार्थैवेति प्रतीयते । तत्र दिङ्मात्रमुदाह्रियते । तद्यथा—पदे पदे प्रयत्नानां वैफल्यं, तेन च प्रवृत्तौ मन्दता, निर्वेदश्च जायते । तदात्व एवाकस्मादपूर्ववस्त्वन्तरप्राप्तौ सत्यां महान्हर्षः, तत्र अनुरागातिशयश्च भवतः । तादृशवस्तु साध्यकार्यकलापविषयकसङ्कल्पपरंपरा च वर्धते । न च पूर्णो भवति मनोरथः । वस्तु च तत् अकस्मादपैति । तेन च भवति महान्विषादः, निर्वेदातिशयश्च । इतः परं किमपि न कर्तव्यं, किमस्ति लोके, यथाकथंचित् कालो यातु इत्येवमादयः कति कति अनुभवाः कैर्वा नानुभूयन्ते? एवमनुभवेऽपि न विरज्यामहे, परन्तु तत्रैव रज्यामहे । अहो! मायावैचित्र्यम् ॥

एतेन एवं प्रतीयते — यथा लोके केचन जनाः गृहागतान् स्वयमेव प्रस्थानोन्मुखान् विधातुं तदीयेच्छाप्रातिकूल्याचरणेन अरुचिमुत्पादयन्ति, तथा लोकव्यवहारं सर्वमपि अस्मदिच्छाप्रातिकूल्येन प्रवर्तयन् परमेश्वरः 'कदा नु कथं नु अयमितो विरज्य मामभिगन्तुं व्यवस्येत्' इति कृपया प्रतीक्षत इव इति । अत एवाऽऽह भगवान् —

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥

नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥

वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥

येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ताः भजन्ते मां दृढव्रताः ॥ इति ॥

भगवान्भर्तृहरिरपि एतादृशभगवदभिप्रायं उपोद्बलयतीव-

भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं
मानें दैन्यभयं बले रिपुभयं रूपे जराया भयम् ।
शास्त्रे वादिभयं गुणे खलभयं काये कृतान्ताद्भयं
सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम् ॥

ननु विचित्रभोगादिमत्त्वात् इहलोकवासस्य, कारागृहवासतुल्यत्वं कथमिति न शङ्कनीयम् । कारागृहस्य द्वैविध्यात् । तथाहि— तत्र एकं चौर्यादिप्रयुक्तं बहुदुःखजनकं क्रूरं च । अपरं तु धनादिप्रत्यर्पणाशक्त्यादिप्रयुक्तं सौम्यं च । सौम्यभूते तत्र तत्तद्विभवानुसारेण विचित्रोपचारभोगादितारतम्यमपि वर्तत एव । लोके अतिदुःखिनोपि प्राणिनः दृश्यन्त एव । अतः कारागृहवासतुल्यत्वं नापैति ॥

किञ्च यथा कारागृहद्वयमपि मानिनां विवेकिनां च भीषकमेव

भवति दुःखजनकं च । अत एव केचन विवेकिनः 'यदि ऋणं न दास्यसि, तर्हि कारागृहं प्रवेशयामि' इत्युत्तमर्णोक्तिमात्रेण कम्पिताः सन्तः प्रत्यर्पणाय त्वरन्ते । तथा इहलोकवासोऽपि विशुद्धान्तःकरणानां महापुरुषाणां भीतिदुःखजनक एव भवति । अत एव इतो विरज्यमाना दृश्यन्ते केचन महापुरुषाः ॥

'केचन प्रमत्ताः सर्वत्र वासतौल्यं मन्यमानाः यत्किञ्चित् कृत्वा कारागृहेऽपि कुतूहलिनो भवन्ति' इति कृत्वा तानुदाहृत्य न वर्णितव्यम् । एवं सति इहलोके सार्वदिकमभयं सुखं च यदस्मदभिलषितं तत् कथं लब्धुं शक्यम्? को नाम विवेकी कारागृहे सुखमभयं च प्राप्नोति, अभिलषति वा? न च तावन्मात्रम्; अपि तु अनुभूयमानविषयादिसुखमपि तदनुभवकाले तदर्थश्रमनिवृत्तिकामादिनिवृत्तिमात्रेण औपचारिकमेवेति पर्यवस्यति । अत एवाह भगवान्भर्तृहरिः —

तृषा शुष्यत्यास्ये पिबति सलिलं शीतमधुरम्
क्षुधार्तः शाल्यन्नं कवलयति मांसादिकलितम् ।
प्रदीप्ते कामाग्नौ सुदृढतरमालिङ्गति वधूं
प्रतीकारं व्याधेः सुखमिति विपर्यस्यति जनः ॥ इति ।

नाऽपि तावन्मात्रम् । तादृशसुखसाधनशब्दादिविषया अपि न विश्वासयोग्या वर्तन्ते । यतः कर्मानुरोधेन स्वल्पकालं अधिककालं वा स्थित्वा दृढानुरागमुत्पाद्य क्षणकालमपि स्ववियोगासहनसमयं

प्रतीक्ष्य वञ्चकपुरुषवत् मध्येमार्गं अनापृच्छ्यैव अवश्यं गमिष्यन्तः अधिकसंतापजनका भवेयुः । अतः, पूर्वमेव तत्स्वभावं पर्यालोच्य बुद्धिपूर्वकतया तत्परित्यागे अनन्तसुखलाभः स्यात् । तदुक्तं श्रीभगवत्पादैः —

द्रव्यं पाणितलाच्च्युतं यदि भवेत्क्वापि प्रमादात्तदा
शोकायाथ तदर्पितं श्रुतवते तोषाय च श्रेयसे ।
स्वातन्त्र्यात् विषयाः प्रयान्ति यदमी शोकाय ते स्युश्चिरं
सन्त्यक्ताः स्वयमेव चेत्सुखमयं निश्रेयसं तन्वते ॥ इति ॥

भगवान् भर्तृहरिरप्याह —

अवश्यं यातारश्चिरतरमुषित्वाऽपि विषयाः
वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ।
व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः
स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥ इति ॥

नैव तावन्मात्रम् । अवस्तुभूताश्च तादृशशब्दादयः स्वाप्निकपदार्थवत् आद्यन्तयोरदर्शनात् । 'आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा' इति श्रीगौडपादाचार्याः आहुः । गीतास्वप्युक्तं श्रीभगवता—

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥

मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ।
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ॥

मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ इति ।

नन्वेवं स्वप्नकालिकपदार्थजातस्य व्यवहाराक्षमत्वेन अवस्तुत्वेपि सम्यक् व्यवहारक्षमाणां जाग्रत्पदार्थानां कथं अवस्तुत्वमिति चेत् न, तेषामपि स्वप्नकालीनव्यवहाराक्षमत्वात् । अवस्थान्तर-व्यवहाराक्षमत्वं तत्तदवस्थाव्यवहारक्षमत्वं च उभयेषां समानमेव । अत एवाऽऽहुः कारिकाचार्याः—

सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ।
तस्मादाद्यन्तवत्वेन मिथ्यैव खलु ते स्मृताः ॥ इति ।

एवमुभयोरवस्तुत्वेपि 'असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते' इति न्यायेन जाग्रद्व्यवहारस्य परमपुरुषार्थसाधनसंपादन-क्षमत्वं वर्तते । नतु स्वाप्निकेषु तदस्ति जाग्रन्मात्रविषयकत्वात् विधि-निषेधयोः । अतः देशान्तरगतपुरुषवत् अस्माकं समीहितश्रेयस्साधन-संपादनरूपं कार्यं झटिति निर्वर्त्य स्वस्थानप्राप्तिविषय एव अतीव त्वरमाणता युक्ता ॥

एतावता इहलोकवासः बहुविधदुःखभयव्रातभूयिष्ठत्वात् कारागृहवासतुल्यः, जिहास्यश्च इति यद्यप्यवगतम्; अथापि स्वास्थ्यापरपर्यायश्रेयस्साधनकलापभूयिष्ठत्वात् महावैद्यशालावासतुल्यः उपादेयश्च इत्यपि प्रत्येतव्यम् ॥

तथाहि — यथा दीर्घरोगिणः केचित् रोगपीडिताः सन्तः

'कदा वा कथंनु निवृत्तरोगाः स्याम। को नु महापुरुषः तथा विधास्यति' इति चिन्तापारवश्यसमये केनापि आप्ततमेन महाचिकित्साशालां प्रवेशिताश्चेत् ते यथा प्रधानवैद्याधीना भूत्वा तदुक्तं पथ्यमाचरन्तः तद्दत्तं औषधमनुपानं च सेवमानाः रोगनिवृत्तिप्रकार एव दत्तदृष्टयो भवेयुः; तथा वयमपि मायादोषप्रयुक्तदीर्घबन्धरोगा भूत्वा रोगपीडामपि अनुभवामः। गर्भवासकालिकविवेकवशात् 'कदा मुक्तः स्याम्' इत्यादिचिन्तापरवशाश्च अभूम। इदानीमपि मध्ये मध्ये बहुसङ्कटसमये एतादृशोपद्रवनिवृत्त्या कदा वा सुखी स्यामित्यादिचिन्ताऽपि अवशात् जायत एव। तथा महाचिकित्साशालास्थानीयं इहलोकं च परमाप्ततमेन परमेश्वरेणैव प्रवेशिताः स्मः। स एव परमेश्वरः इहलोकचिकित्साशालायाः प्रधानवैद्यः। अहो अस्मद्भागधेयं! यत् प्रधानवैद्योपि सन् अनपेक्षः अवाप्तसमस्तकामः स्वयमेव प्रवेशयिता च संवृत्तः। तस्य प्रथमभिषक्त्वेन श्रूयमाणत्वात्। तेन कृपालुना 'बन्धरोगनिवृत्तये अत्र प्रवेशिताः स्मः' इति प्रतिक्षणं स्मरन्तः तदुक्तं पथ्यस्थानीयं स्वस्वधर्मं आचरन्तः 'तद्दत्तं सुखं मधुरौषधस्थानीयं, दुःखं च तिक्तौषधस्थानीयं' इति मत्वा अनुभवन्तः, तदनुपानस्थानीयं च पुत्रमित्रकलत्रादिकं शब्दस्पर्शादिकं च यथाप्राप्तमुपयुञ्जानाः वर्तेमहि। तथा वर्तनमेव बुद्धिमतां युक्तम्।

अत्र श्रीलोकगुरवः तपस्विनः महर्षितुल्याः महनीयपुरुषाश्च वैद्यशालास्थावान्तरविचारकोपवैद्यस्थानीयाः सञ्चरन्तो वर्तन्ते। तद्द्वारा मध्ये मध्ये संभवत्संशयविपर्यासज्ञानं निवर्तयेम। एवमेव यथा तत्र-

त्यरोगिणः अन्यस्मै उक्तं दत्तं वा पथ्यं औषधं अनुपानं वा प्रधान-वैद्यानुमतिमन्तरा न सेवन्ते । कुतः? रोगनिदानानुसारेण रोगनिवृत्ति-तारतम्यानुसारेण वा औषधभेदस्य मिश्रणभेदस्य वा संभवात्, तस्य हिताहितत्वनिर्णये च अशक्तत्वात् इति वक्तव्यं । तथा अस्माभिरपि अन्यदीयपथ्यौषधानुपानीयस्थानीयपदार्थजातं तदनु-मतिमन्तरा न सेवनीयमेव । तदनुमतिश्च श्रुतिस्मृतिरूपैव । यतो वयमपि शास्त्रमन्तरा तस्य हिताहितत्वनिर्णये अशक्ता एव । अस्म-दभ्यूहस्तु तात्कालिकहिताहितत्वमात्रमवगाहते; न त्वागामिकालीनम् । 'यत्तदग्रे विषमिव परिणामेऽमृतोपमम्' 'यत्तदग्रेऽमृतमिव परिणामे विषोपमम्' इति च श्रीगीताचार्यैरुक्तम् । अनुभवेनापि एवमेवेति निश्चेतुं शक्यमेव । अतो विना शास्त्रं हिताहितत्वनिर्णये न प्रभवाम एव इति सिद्धम् ॥

किंच तत्र शालायां यथा रोगिणः तिक्तं मधुरं वा उभयविध-मपि औषधं समानबुद्ध्या उत्साहेन सेवन्ते । तत्र किं कारणम्? यतः 'उपयोगकाले श्रमसत्वेऽपि रोगनिवर्तने साधनतमं तत्' इति मन्यन्ते; तथा अस्माभिरपि 'दुःखानुभववेलायां पापक्षयः, सुखा-नुभववेलायां पुण्यक्षयश्च भवति। पुण्यपापे च बन्धरूपे एव । अतः उभयानुभववेलायां बन्धनिवृत्तिस्समानैव' इति मत्वा सन्तोषबुद्ध्या स्थातव्यम् । तदुक्तं श्रीनारदेन—

दैवोपसादितं यद्यत् स तेन सुखदुःखयोः ।
आत्मानं तोषयन्देही तमसः पारमृच्छति ॥ इति ।

अत्र सुखदुःखयोर्मध्ये वर्तन् दैवोपसादितं—इत्यन्वयक्रमः ।

किंच यथा रोगिणः वैद्यशालायां विद्यमानतत्तत्प्रधानौषधादिकं सर्वमपि अनुभवितुं अस्माकं भाग्यं नासीत् किलेति न शोचन्ति., नापि तत्तादृशौषधानुभवसिद्ध्यै रोगाभिवृद्धिं संपादयन्ति, प्रार्थयन्ते वा । तथा अस्माभिरपि लोकरीत्या 'तत्तादृशविभवातिशयो वा भोगातिशयो वा अस्माकं नासीत्किल' इति न चिन्ताशोकादिकं कर्तव्यम् । अत एव वैद्यशालास्थावान्तरविचारकोपवैद्यपुरुषस्थानीयः भगवान्भर्तृहरिः अस्मान् उल्लासेन पथ्यौषधादिकं सेवयन् उपदिशति—

वाञ्छा सज्जनसङ्गतौ परगुणे प्रीतिः गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिः लोकापवादाद्भयम् ।
भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खलैः
एते येषु वसन्ति निर्मलगुणाः तेभ्यो नमः कुर्महे ॥

तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनम् ।
मान्यान् मानय विद्विषोऽप्यनुनय प्रख्यापय प्रश्रयं
कीर्तिं पालय दुःखिते कुरु दयां एतत्सतां चेष्टितम् ॥

इति च । तथाच पथ्यविशेष–औषधविशेषस्थानीयानां एतादृशोत्तमगुणगणानां परिशीलनेन अस्माकं वृथा चिन्ताशोकादिकं न स्यादिति भावः ॥

अत्र यद्यपि आरम्भप्रभृति विचारितरीत्या सर्वमपि झटिति

कर्तुं न शक्यम् । वैराग्यमपि झटिति न सुसंपादं । तदर्थं हस्तप्राप्तं सुखमपि स्वल्पं वाऽधिकं वा न त्यक्तुं शक्यमेव । अथापि पूर्वं विचारितरीत्या इहलोकः कारागृहस्थानीयः, वैद्यशालास्थानीयश्चेति निर्णीतम् । तादृशोभयविधत्वेपि ततो निर्गमनार्थैव यतितव्यं इत्यत्र नास्ति संदेहः । न हि कोऽपि प्रेक्षावान् अपराधी वा रोगी वा कारागृह एव, वैद्यशालायामेव वा स्वायुष्कालं सर्वं निनीषति । ततो निर्गमनोपायभूतं चेदमतिदुर्लभं मनुष्यशरीरम् । तच्च काश्मीर-खण्डवत् सारक्षेत्रं अनर्घमोक्षफलपर्यन्तप्रापणाय समर्थं च । अतः तादृशं शरीरममोघं कर्तुं धर्माविरोधेन भोगानुभवः, स्वधर्माचरणे यत्नाधिक्यं, देवपितृकार्येषु अप्रमादेन वर्तनं, साधूनां गुणगण-संपादने आभिमुख्येन प्रवृत्तिश्च इत्यादिकमवश्यं कर्तव्यं शक्यं च ॥

'सत्यम्, समीचीनमेवोच्यते! अथापि भृत्येऽपि गृहालाभ-समये गृहे पूर्वमस्माभिः स्थापितो दुर्जनो यथा गृहान्निष्कासयितुं न शक्यते तद्वत् अधर्मबहुले एतत्काले अस्मासु स्वयमेव प्रविष्टं अश्रद्धाऽऽलस्यादिकं निष्कासयितुमेव न शक्यते । तदेवालस्यादिकं सर्वसत्कार्यप्रतिबन्धकं वर्तते । किं कुर्मः ?' इति चेत्, सत्यं! साधुभूतोऽयं सन्तापः । परंतु किमयं वस्तुभूतस्सन्तापः? उत आलस्यादिप्रेरणया अभिनयरूपो वा? इति विचारणीयम् । वस्तुभूतत्वे आलस्यादिनिरसनेपि यत्नः स्यादेव । यतः न यत्यते, अतः अभिनयरूप एवेति पर्यवस्यति । किमर्थमेवमभिनीयते? आलस्यादि-

प्रेरणाप्रयुक्ताभिनयेन न तस्य काऽपि हानिः । अस्मत्स्वार्थहानिरेव संपद्यते । अतः वस्तुभूतसत्तानुसरणमेव युक्तम् । तथात्वे अयत्नतः पापनिवृत्तिरपि भवति ॥

किंच दृष्टफले लौकिकव्यवहारे आलस्यादिकमपि अभिभूय तीव्रयत्ना भवामः । तत्र किं कारणं? तत्साध्यफले तीव्रेच्छासत्वमेव । तदपि कुतः? फलस्य दृष्टरूपत्वादिति वक्तव्यम् । यदि हि सद्यः-फलत्वेन लौकिकव्यवहारे तीव्रेच्छया प्रवृत्तिः, तर्हि अदृष्टफले वैदिकव्यवहारेऽपि तथा प्रवृत्तिः सुतरां युक्ता । यतः अदृष्टसामग्र्येव दृष्टफलमपि अनुभावयति । तत्साधनपदार्थानपि संघटयति । अतः लौकिकव्यवहार इव वैदिकव्यवहारेपि आलस्याश्रद्धादिकं निरस्य तीव्रेच्छया प्रवर्तनीयमेव इत्यवगन्तव्यम् ।

एवं जाग्रत्स्वप्नयोः लौकिकवैदिकव्यवहारेषु यथायथमवि-श्रान्तव्यापृतकार्यकरणानामस्माकं विश्रान्तिलाभाय प्रतिदिनमनुभूयमाना या सुषुप्त्यवस्था, तस्यामेवावस्थायां निरतिशयसुखमप्यनुभूयत एव । सुखमहमस्वाप्समिति सुप्तोत्थितस्य परामर्शदर्शनात् । परामर्शश्च नानु-भवमन्तरा उपपद्यते। तत्र यत् निरतिशयसुखमनुभूयते, तदेवास्मदीय-पारमार्थिकस्वरूपं, प्राज्ञात्मसंपरिष्वङ्गश्रवणात् । 'स्वमपीतो भवति' इति स्वपितिनामनिर्वचनश्रवणाच्च । तदेव सत्यज्ञानानन्दरूपं । तत्सत्वादेव सर्वेषामुच्छ्वासनिश्वासप्रचलनं च । तत्सकाशादेव परि-दृश्यमानप्रपञ्चसृष्टिस्थित्यादिः । तस्मादेव भीतास्सन्तः आदित्यादयः

स्वस्वकार्यमनवरतमन्यूनं कुर्वन्तो दृश्यन्ते । तत्सम्यग्ज्ञानार्थैव सर्वे वेदान्ताः प्रवृत्ताः । तत्प्राप्तावेव यदस्मदभिलषितं सार्वदिकं अभयं सुखं च तदपि सिद्ध्येत् ॥

ननु तथाचेत् सुषुप्तिसुखानुभवस्य सिद्धत्वेन स्वरूपसुखप्राप्तिरपि सिद्धैवेति उत्थितस्य कथं दुःखभयानुवृत्तिः दृश्यते इति चेत्; उच्यते । अत्र च स्वरूपसुखप्राप्तिः विस्मृतकण्ठाभरणप्राप्तिवत् प्राप्तप्राप्तिरूपैवेति विभावनीयं । तथाहि — यथा कश्चित् कण्ठस्थमेवाभरणं विस्मृत्य, नष्टत्वभ्रान्त्या तदाभरणं बहुत्र अन्विष्यति । बहु दुःखं च अनुभवति । तत्काले दैववशात् आप्तः कश्चिदागत्य यन्नष्टं मन्यसे आभरणं, तत् तव कण्ठ एव वर्तते इति बोधयति चेत्, तद्बोधमात्रेण कण्ठस्थमेवाभरणं प्राप्नोति । अपूर्वप्राप्तिवत् नष्टप्राप्तिवच्च परमानन्दमनुभवति । तादृशं आप्तं च नितरां श्लाघते । तथा अस्माकमपि नित्यप्राप्तमेव स्वरूपसुखं अज्ञानवशात् अप्राप्तमिव, तत्सम्यग्ज्ञानात् प्राप्तमिव च भवति । अतः अत्र अज्ञानरूपैव अप्राप्तिः ज्ञानरूपैव तत्प्राप्तिश्चेति पर्यवस्यति । भ्रमस्थले अन्यथा तयोः दुर्निरूपत्वात् । अतश्च सुषुप्तौ स्वरूपसुखानुभवेऽपि न तत्प्राप्तिरस्ति । 'न किञ्चिदवेदिषं' इति सुप्तोत्थितपरामर्शेन तदानीमज्ञानस्य जागरूकत्वावगमात् । अत एव सुषुप्तौ सुखस्य अनुभवेऽपि अस्फुरणमुपपद्यते । यथा रसखण्डभक्षणसमये माधुर्यं स्फुरति, तथा तत्र सुखास्फुरणात् । अतः अज्ञानसमकालीना या स्वरूपप्राप्तिः, सा सर्वावस्थासु समानैव । परन्तु सुषुप्तौ विषयानुपरक्तसुखानुभवः

अतिरिच्यते । अवस्थान्तरे विषयोपरक्तत्वं परं सुखानुभवे अतिरिच्यते । सुखं तु तदेव, यत् सुषुप्तौ अनुभूयते । तथाच जाग्रति, स्वप्ने, सुषुप्तौ, मोक्षे च अस्मत्स्वरूपसुखमेवानुभूयते इति उक्तप्रायम् ॥

परन्तु इयानेव विशेषः । यत् जाग्रत्स्वप्नयोः पराधीनतया परप्रेष्यभावापन्नवत् बहुलायासपूर्वकं अवज्ञादत्तकदन्नमिव अनुभूयते सुखम् । सुषुप्तौ तु स्वतन्त्रं अनुभूयते । अथापि अनुभवकाले स्फुरणं नास्ति. मोक्षे तु स्फुरणमस्तीति विशेषः । यतः तत्र मायायवनिकाऽपसृता, अतः स्फुरति । स्फुरणं चात्र 'अवगतिपर्यन्तं ज्ञानं सन्वाच्यायाः इच्छायाः कर्म' इति भाष्योक्तावगतिरूपम् । तादृशयवनिकापसरणं च परमाप्ततमेन परमदयालुना श्रीगुरुणैव कर्तुं शक्यम् । अतः कदा तादृशगुरुकटाक्षलाभो भविष्यतीति तत्प्रतीक्षणमेव युक्तम् । तदर्थं च न तूष्णीं स्थातव्यम् । यथा श्रीभर्तृहरिणा उक्तं, तथा वर्तितव्यम् । तद्यथा—

निन्दन्तु नीतिनिपुणाः यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ इति ।

न्याय्यश्च पन्थाः कः? इति चेत्, 'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ' इति परमाप्ततमश्रीगीताचार्येण उक्तत्वात् तादृशशास्त्रीयमार्ग एव न्याय्यः पन्थाः । शास्त्रं च श्रुतिस्मृत्यादयः ।

गीतासु च सर्वशास्त्रार्थः उक्तः । ताश्च गीताः गुरूपसदनसंप्रदाय-रीत्यैवाध्येतव्याः । तदानीमेव गीतार्थः यथावत् प्रतिभायात् ॥

एवं स्थिते इदानीं अस्मद्भाग्यवशात् परमकृपालवः श्रीभगवत्पादाचार्याः क्षुधितबालमातृन्यायेन अस्माननुजिघृक्षन्ति इति प्रतिभाति । तथाहि — यथा बुभुक्षया स्थालीपर्यस्तान् शुष्कान्नपुलाकान् चिन्मुद्रया गृहीत्वा आस्यप्रापणवेलायां अन्तरा अन्तरा अधः पातयन्तं, एवं पुनः पुनः गृह्णन्तं पातयन्तं च बालकमालोक्य, अहो ! बुभुक्षितो बाल इति परवशा माताससंभ्रममागत्य घृतसूपकलितं अन्नं सम्यक् संयुत्य स्वादु स्वयमेवास्यं प्रापयति, तथा निरतिशयानन्दानुबुभूषया फल्गुविषयानन्दसाधनकलापसंपादनव्यग्रान् पदे पदे भग्नप्रयत्नान् अस्मान् वीक्ष्य कृपापरवशः श्रीगुरुः निरतिशयानन्दमेव स्वयमेवानुभावयितुं इदं देशिकाष्टकं नाम स्तोत्ररत्नं आविर्भावितवानिति प्रतीयते ॥

इदञ्चाष्टकं दैनन्दिनसेवनगुटिकास्थानीयम् । यथा मन्दाग्नीनां तादृशगुटिकासेवनेन जाठराग्न्यभिवृद्ध्या स्वारस्येन भोजनादौ प्रवृत्तिः, क्रमेण पुष्ट्यारोग्यं च वर्धते, तद्वत् एतदष्टकसेवनेन पापविरेचनं स्वधर्माचरणाभिरुचिः, तदनुष्टानं, चित्तपरिपाकादिः, एवं क्रमेण परमानन्दप्राप्तिश्च भवति ॥

ननु नित्यनैमित्तिककर्माचरणेन श्रीमदाचार्यकृतस्तोत्रकदम्बपारायणेन च एतत्सिद्धौ किमनेन? इति चेत्, सत्यं सिद्ध्यति,

यदि तत्र स्वारसिकी प्रवृत्तिः स्यात् । इदानीं तु तादृशी प्रवृत्तिरेव नष्टप्राया वर्तते । तत्राभिरुचिसंपादनार्थैव अपूर्वौषधस्थानीयमिदमष्टकं आविर्भावितम् । भवतु, अत्रापि अभिरुच्या प्रवृत्तिः कथं सिद्ध्यति इति चेत्, कृपापरवशश्रीगुरुसंकल्पविशेषमहिम्नैव सेत्स्यति । तर्हि एतादृशसंकल्पविशेषः साक्षात् नित्यनैमित्तिकादिप्रवृत्तावेव भवतु इति चेत्, उच्यते; श्रीगुरोः सर्वज्ञस्य सत्यसंकल्पस्य संकल्पविशेषनियमने कथं वयं प्रभवेम । नहि ज्ञानप्रदो गुरुः मनुष्यविशेषमात्र इति मन्तव्यं । स खलु साक्षात्परमेश्वर एव । तदुक्तं —

मनुष्यचर्मणा बद्धः साक्षात्परशिवः स्वयं ।
सच्छिष्यानुग्रहार्थाय गूढं पर्यटति क्षितौ ॥

सद्भक्तरक्षणायैव निराकारोऽपि साकृतिः ।
शिवः कृपानिधिर्लोके संसारीव विचेष्टते ॥ इति ।

किंच शैशवप्रभृति तत्तदवस्थापर्यन्तं लौकिकवैदिकव्यवहारोपयोगितत्तद्विशेषपरिज्ञानं स्वयमेव कस्यापि न भवति, शक्तिग्रहणवत् । किन्तु बहुजनप्रवृत्तिव्यवहारवचनमुखादेव भविष्यतीति वक्तव्यम् । यथा 'अयं घटपदवाच्यः, अयं पटपदवाच्यः' इत्याकारकशक्तिग्रहः अन्याधीन एव । तथा तद्ग्रहणानन्तरमपि तत्तत्पदार्थप्राप्तिस्थलपरिज्ञानं वा तत्तदुत्पत्तिस्थलकालज्ञानं वा तत्तत्पदार्थसाध्यार्थक्रियाज्ञानं वा सर्वमपि अन्याधीनमेव, न स्वतः इत्यनुभवसिद्धम् ॥

तत्र सर्वत्रान्यत्वेन अभिमतेषु प्राणिषु गुर्वंशः विद्यमानस्सन्नेव ज्ञानांशं प्रयोजयति इत्येव वक्तव्यम् । यतः गुरोरेव अज्ञाननिरोधेऽधिकारः, तत्पदनिर्वचनस्य तथा श्रुतत्वात् । यथा —

गुकारस्यान्धकारोऽर्थः रुकारस्तन्निरोधकः ।
अन्धकारनिरोधित्वात् गुरुरित्यभिधीयते ॥ इति ।

अत एव इदमपि संगच्छते—

लौकिकं वैदिकं वाऽपि तथाऽऽध्यात्मिकमेव च ।
आददीत यतो ज्ञानं पूर्वं तमभिवादयेत् ॥ इति ।

अत्र लौकिकज्ञानस्यापि गुरुमूलकत्वमुक्तं, संकोचे प्रमाणाभावात् । सर्वलौकिकज्ञानस्यापि तन्मूलकत्वमुक्तं भवति ॥

किंच 'ब्रह्मादिस्तम्बपर्यन्तं यस्य मे गुरुसन्ततिः । तस्य मे सर्वपूज्यस्य को नु पूज्यो महीतले ॥' इति वचनेन श्रीगुरोः सर्वत्र विद्यमानता स्फुटं प्रतीयते । 'सर्वपूज्यस्य' इत्यत्र बहुव्रीहिसमासः । तथा—'गुरुबुद्ध्या नमेत्सर्वं दैवतं तृणमेव वा । नमेच्च देवबुद्ध्या तु प्रतिमा लोहमृण्मयीः ॥' इति वचनमपि श्रीगुरोः सर्वत्रास्तित्वं स्फुटं प्रतिपादयति । यतः अत्र देवबुद्धिकरणस्य प्रतिमाविषयत्वं नियम्यते । गुरुबुद्धिकरणस्य सर्वविषयत्वं प्रतिपाद्यते । अत एव गोपालाजपालादयोऽपि अपरिचितस्थले समीचीनमार्गप्रदर्शका भवन्ति । मक्षिकामशकादयोपि अवश्यजागरितव्यकाले निद्राणस्य दंशनादिना प्रबोधका भवन्ति ॥

एवं च सर्वत्र स्वांशेन वर्तमानस्सन् श्रीगुरुरेव सर्वव्यवहारं निर्वर्तयतीति सिद्धं। तादृशगुरुः एतत्सन्दर्भानुसारेण देशिकाष्टका-विर्भावनेनाप्युपकरोतीति वा, तच्च देशिकाष्टकं परंपरया परमानन्द-प्रापकमिति वा नानुपपन्नं। यस्य गुरोः प्रसादः क्षणार्धेनापि मोक्षलक्ष्मीप्रापकः, तादृशश्रीगुरोः अनुग्रहफक्किका ईदृग्विधैवेति कथं निर्णेतुं शक्या? तदुक्तम्—

यः प्रसन्नः क्षणार्धेन मोक्षलक्ष्मीं प्रयच्छति।
दुर्लभं तं विजानीयाद् गुरुं संसारतारकम्॥

निर्गतं यद्गुरोर्वक्त्रात् सर्वशास्त्रं तदुच्यते।
निषिद्धमपि तत्कुर्यात् गुर्वाज्ञां नैव लङ्घयेत्॥ इति

अत्रोक्तानि वक्ष्यमाणानि च गुरुविषयाणि सर्वाणि वचनानि ललितोपाख्याने विद्यन्ते। तानि च अचिन्त्यमहिम-श्रीगुरुविषयकाणीति भूतार्थवादान्येव॥

एवं सर्वप्रकारेणास्माकं सर्वदा परमोपकारिणः श्रीगुरोः अनवरतस्मरणं कर्तव्यमित्यनुक्तसिद्धम्। तत्स्मरणेनैव सर्वत्रापि कृतज्ञता प्रदर्शिता स्यात्। इदमष्टकञ्च प्रातिस्विकतत्तन्माहात्म्य-घटितगुरुस्मरणोपयोगितया प्राप्तमस्ति। गुरुस्मरणे कृते तत्वचिन्त-नमपि कृतं भवति। 'उत्तमा तत्वचिन्ता स्यात्', 'नास्ति गुर्वधिकं तत्वं' इति च उक्तत्वात्। अतः तदनुग्रहाविर्भूतं दैनन्दिनसेवना-

ह्यौषधस्थानीयं देशिकाष्टकं सायंप्रातरवश्यं पठनीयम्। तद्भूमिका च तदनुपानस्थानीयेति, सापि अवश्यं पठनीया। 'औषधविधायक एवानुपानमपि विधत्ते' इति सा भूमिकाऽपि तदनुग्रहरूपैव। ते च श्रीभगवत्पादाचार्याः अस्माकमापद्बान्धवाः परमहितैषिणश्चेति तद्-चरणप्रभृत्यवधृतमस्ति। काले चास्मिन् अनर्गलमधर्माणां बाहुल्येन प्रसरणं, निरर्गलं स्वधर्मेषु वैमुख्यञ्च प्रत्यक्षीकुर्वतां तेषां अस्मदुद्दि-धीर्षा जागर्ति 'गोली' वचनस्थानीयेन एतदष्टकाविर्भावेन प्रतीयते। न तेषां संकल्पोऽन्यथा भवति। अतश्चाष्टमूर्तिस्वरूपाः ते स्वयं देशिकाष्टकरूपेणाऽऽविर्भूय, तद्भूमिकारूपेण स्वोपदेशमप्या-विष्कृतवन्त इति मन्तव्यं। अतः तद्भूमिकां सम्यक्पठित्वा, अर्थ-तश्च यथायथं अवधार्य, अन्यस्मा अपि सोऽर्थः अवश्यं वर्णनीयः, 'एकः स्वादु न भुञ्जीत' इति न्यायात्। सतां रीतिरपि एवमेव—यत् भिन्नमतेन शास्त्रतोऽमनोऽर्थः स्वावगतः, सोऽर्थः तदनभिज्ञेभ्यो-ऽपि बोधनीयः, अन्यथा तस्मात्तानां अन्धानां समीचीनमार्गप्रदर्शनवत् इति॥

तदुक्तं ऋषभदेवेन— 'लोकः स्वयं श्रेयसि नष्टदृष्टिर्योऽर्था-न्समीहेत निकामकामः। अन्योन्यवैरः सुखलेशहेतोरनन्तदुःखञ्च न वेद मूढः॥ कस्तं स्वयं तदभिज्ञो विपश्चिदविद्यायामन्तरे वर्तमानम्। दृष्ट्वा पुनस्तं सघृणः कुबुद्धिं प्रयोजयेदुत्पथगं यथाऽन्धम्॥ गुरुर्न स स्यात्स्वजनो न स स्यात्पिता न स स्याज्जननी न सा स्यात्। दैवं न तत्स्यान्न पतिश्च स स्यान्न मोचयेद्यः समुपेतमृत्युम्॥' इति॥

किञ्च यथा अव्यक्तकलमधुरं प्रियबालभाषणं श्रोतुकामाः मातापित्रादयः केनापि व्याजेन बालान्भाषयन्ति। पुनः पुनः शृण्वन्ति नितरामानन्दमनुभवन्ति च। तथा श्रीगुरवोऽपि देशिकाष्टक-तद्भूमिकाव्याजेनास्मान्भाषयन्तः नितरामानन्दमनुभवन्ति। अतः तदष्टकपठनेन तद्भूमिकापठनेन च श्रीपरमाचार्यान्सन्तोषयेम। तत्सन्तोषेण च आत्मलाभं लभ्यामहे। तेन चानवरतमस्मदभिलषितं यत् सार्वदिकं अभयं सुखं च तत्प्राप्नुयाम॥

अत्र च, भूमिकाप्रदानेन अस्माननुगृहीतवतां मूकाम्बिकाक्षेत्र-सहवासप्रभृतिचिरकालवात्सल्यवतां ब्रह्मचर्यादेव सन्यस्तवतां हृदयङ्गम-चटुलचतुरललितपदविन्यासप्रसावितकवितास्वयंवृतानां श्रीसच्चिदानन्द-तीर्थेति योगपट्टालंकृतानां भाष्यस्वामिन इति, महादानपुरस्वामिन इति च प्रसिद्धोपपदोपदावतां परमहंसाग्रेसराणां कृतज्ञतापूर्वकं प्रणाम-ततिं प्रतिपादयामः॥

अस्मद्विषये प्रेमातिशयेन आङ्गिलभाषाप्रस्तावनां वितीर्णवतां शान्तिदान्तिविनयालंकृतानां मितभाषिणां सारभाषिणां सारग्राहिणां विशालमतीनां गम्भीरहृदयानां न्यायविदग्रेसराणां श्रीकृष्णस्वाम्यार्याणां कृतज्ञतापूर्वकं वन्दनोपचारं निवेदयामः॥

एतद्ग्रन्थस्य सामग्रयेण द्राविडभाषान्तरीकरणेन नितरां लोकोप-कारं कृत्वा, अस्माकं आनुकूल्यं संपादितवतां सूक्ष्मग्राहिमतिविशालानां विनयादिगुणभूषितानां विद्वदग्रेसराणां तदीयवैदुष्यानुसारेण श्रीवाणी-

विलासमुद्रणालयलब्धवर्णविचारकभावं प्राप्तानां श्रीवेङ्कटरामशास्त्रिणां कृतज्ञतापूर्वकं क्षेमपरंपरां प्रार्थयामः इति शिवम्। इदमस्तु भद्रनियानामाशंसनम् ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां
न्याय्येन मार्गेण महीं महीशाः।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं
लोकास्समस्ताः सुखिनो भवन्तु ॥

ईश्वरो रक्षतु।

श्रीशङ्करदीक्षितः
कृष्णराजपुरम्।



## ॥ भूमिका ॥

### (தமிழ் அனுவாதம்)

ஆஸ்திக மஹாசயர்களே! இவ்வுலகில் நாமெல்லோரும் பயமில்லாத அழிவற்ற ஸுகத்தை அடைய விரும்பியே எல்லா முயற்சிகளையும் செய்கிறோம். எடுத்த முயற்சியின் பலனை யாருமடைவதில்லை. அதற்காக முயற்சியை விடவுமில்லை. இவ்வுலகில் எப்பொழுதும் எவ்விதத்திலும் துக்கமும் பயமுமில்லாத புருஷன் ஒருவனையாவது காணவில்லை. இதற்கு என்ன காரணம்? உலகிலுள்ள பொருள்களெல்லாம் எங்கும் எப்பொழுதும் ஏதாவது ஓர்விதத்தில் பயத்தையோ துக்கத்தையோ கொடுப்பதாகவே முடிகிறது என்பதே. எந்த ஒருபொருள் குறிப்பிட்ட ஒரு காலத்திலோ, அல்லது இடத்திலோ ஸுகத்தைக் கொடுப்பதாகத் தோன்றுகிறதோ, அதே பொருள் மற்ற சமயத்திலும் மற்ற இடத்திலும் துக்கத்தையே கொடுக்கிறது. இதற்கு திருஷ்டாந்தமாக குளிரையும் உஷ்ணத்தையும் எடுத்துக்கொள்ளலாம். கோடைகாலத்திலும் உஷ்ணதேசத்திலும் ஸுகத்தைத் தரும் குளிர், பனிகாலத்திலும், குளிர் தேசங்களிலும் துக்கத்தையே தருகிறது. இவ்விதமே உஷ்ணமும். இம்மட்டுமா! வஸ்துக்கள் ஸுகத்தை அளிக்கும் அதே காலத்திலும் தேசத்திலுமே துக்கத்தையும் கொடுக்கின்றன. அதாவது பணம், தங்கம் முதலியவை ஸுகானுபவத்தையும் கீர்த்தியையும் கொடுத்தாலும் ஸம்பாதிப்பதிலும்

காப்பாற்றுவதிலும் மிகுந்த பிரயாஸமேற்படுவதால் அதே தேசத்தில் அதே காலத்தில் துக்கத்தையும் கொடுக்கிறது.

இவ்விதமே ஒவ்வொரு பொருளும் பயத்தையும் கொடுக்கிறது எந்தப் பொருளில் மிகுந்த அன்பு வைக்கிறோமோ, அது நம்மைவிட்டுப் பிரிந்துபோய் விடுமோ என்ற பயத்தை எப்பொழுதும் கொடுத்துக் கொண்டே இருக்கிறது. எதை நாம் வெறுக்கிறோமோ அது துன்பத்தைத் தருமோ என்ற பயம் ஏற்படுகிறது. விருப்பு வெறுப்புக்கு உட்படாமல் உதாஸீனமாக இருக்கும் பொருள்களும் காலாந்தரத்தில் விருப்பு வெறுப்புக்கு உள்ளாகின்றன. இப்பொழுது விருப்பு வெறுப்புக்குள்ளாகும் பொருள்களும் மற்றோர் ஸமயம் உதாஸீன நிலைமையை அடைகின்றன. ஆகையால் எந்தப் பொருள் எந்த இடத்தில் எந்த காலத்தில் நமக்கு விருப்பையோ, வெறுப்பையோ உண்டு பண்ணும் என்பதை யாரும் முன்னால் தீர்மானித்துக் கூறமுடியாது. ஆகவே எல்லாப் பொருள்களும் ஏதாவது ஓர்விதத்தில் நமக்கு பயத்தையே உண்டுபண்ணுகின்றன. மேலும் எந்தப் பொருளும் இயற்கையிலே ஸுகத்தைக் கொடுப்பதாக இல்லை. அதில் பிரீதியுள்ளவர்களுக்கு ஸுகத்தையும் மற்றவர்களுக்கு துக்கத்தையும் கொடுக்கிறது. ஒவ்வொருவருக்கு ஒவ்வோர் ஸமயம் ஒவ்வொன்றில் ப்ரீதி உண்டாகிறது. அதுவும் நியதமில்லை.

இதுவரை கூறியவற்றால் இஹலோக வாஸம்

ஜெயில் வாஸத்திற்கொப்பானதென்று தெரிகிறது. ஜெயில் வாஸத்திலுள்ள கட்டுப்பாடுகளெல்லாம் துக்கத்தையும் பயத்தையும் தருவதுபோல இவ்வுலகில் வாஸஞ்செய்வதும் துக்கத்தையும் பயத்தையும் தருகிறதல்லவா! குற்றம் செய்தவர்களை அதன் பலனை அனுபவிக்கும்படி செய்வதற்காகவும், 'இதுபோல் மறுபடியும் ஜெயில் வாஸம் நேராதபடி ஜாக்ரதையாக நல்வழியில் செல்லவேண்டும்' என்ற புத்தி அவர்களுக்கு உண்டாவதற்காகவும் அவர்களை ஜெயிலில் தள்ளி பல கொடுமைகளுக்கு ஆளாக்குகிறார்கள். இதுபோலவே நாம் முற்பிறவிகளில் செய்த நல்வினை தீவினைகளின் பலனை அனுபவிப்பதற்காகவும், 'மறுபடியும் இவ்வுலகில் பிறவி ஏற்படாமலிருப்பதற்காக இனிமேல் சாஸ்திரங்களில் கூறிய நல்வழியிலேயே செல்லவேண்டும்' என்ற நற்புத்தி ஏற்படுவதற்காகவுமே ஸர்வேசுவரன் இப்பிறவியைக் கொடுத்திருக்கிறார். இதனாலும் இது ஜெயில் வாஸத்திற்கொப்பானதென்று தெரிகிறது. நம் அனுபவங்களை சற்று ஆராய்ந்துபார்த்தாலும் முன்னால் கூறியது உண்மை என்பது புலப்படும். நாம் விரும்பிய பொருளை அடைவதற்காக எவ்வளவோ முயற்சிகள் செய்கிறோம். ஆனால் அநேக ஸமயங்களில் அம்முயற்சிகள் பலனை கொடுக்காமல் வீணாகிவிடுகின்றன. அதனால் மேலும் முயற்சிப்பதில் வேகம் குறைகிறது. விரக்தியும் உண்டாகிறது. அதே சமயம் எதிர்பாராமல் கோரிய பொருள் கிடைக்கிறது. அதனால் மிகுந்த ஸந்தோஷ

மும் கிடைத்த பொருளில் மட்டற்ற ஆசையும் ஏற்பட்டு, அதைக்கொண்டு பின்னால் நடத்தவேண்டிய காரியங்களைப்பற்றி மனக்கோட்டை கட்டுகிறோம். இந்த எண்ணங்கள் முழுதும் நிறைவேறுவதற்குள் அப்பொருள் நம்மைவிட்டுப் பிரிந்துவிடுகிறது. அதனால் மிகுந்த வருத்தமும் விரக்தியும் உண்டாகிறது. "இனிமேல் என்ன செய்தும் பலனில்லை. இவ்வுலகில் என்ன இருக்கிறது. எப்படியாவது காலத்தைத் தள்ளவேண்டும்" என்பதுபோன்ற அநுபவங்கள் யாருக்குத்தான் ஏற்படவில்லை. இவ்விதம் ஏற்படும் வைராக்யமுண்டாவதில்லை. மறுபடியும் அதிலேயே ஈடுபடுகிறோம். என்னே மாயையின் சக்தி!

இவ்விதமாக நாம் நினைக்கிறபடி ஒரு காரியமாவது நடைபெறுவதில்லை. நம் விருப்பத்திற்கு விரோதமாகவே நாம் வேண்டாத காரியங்களையே ஈசுவரன் ஏன் நடத்திவைக்கிறார் என்பதை சற்று ஆராய்ந்து பார்த்தோமானால் அதன் காரணம் இவ்வாறு நமக்கு புலப்படும். லோகத்தில் தன் வீட்டிற்கு வந்து தன் இஷ்டத்திற்கு விரோதமாக வெகுநாள் தங்கியிருப்பவர்களை வெளியில் போகும்படி நேரில் சொல்லத்தயங்கினாகவே அவர்கள் வீட்டைவிட்டுக் கிளம்பும்படி செய்ய அவர்களுக்கு இஷ்டமில்லாததும் அவர்களுக்குப்பிடிக்காததுமான காரியங்களைச் செய்கிறார்களோ, அதுபோல நம் இஷ்டத்திற்கு விபரீதமாகவே காரியங்களைச்செய்து வருகின்ற ஈச்வரனும் 'தீவ்ரவைராக்யத்தை அடைந்து இதிலிருந்து வெளிக்கிளம்பி எப்படி

யாவது நம்மிடம் வந்துசேரமாட்டாளு' என்று என்னுகிறார்போலும்.

மாயையால் மறைக்கப்பட்டுத்தான் ஜனங்கள் என்னை அறிவதில்லை. என்னை வந்து அடைவதில்லை'' என்று பகவான் கீதையில் கூறுகிறார். பர்த்ருஹரியும் உலகிலுள்ள ஒவ்வொரு பொருளும் பயத்தைக் கொடுக்கிறது என்பதை நன்கு விவரித்து ஆசையற்றிருப்பதுதான் பயம் நீங்கும் உபாயமென்று கூறுகிறார்.

இங்கு ஓர் ஸந்தேஹம் உண்டாகலாம். "ஜெயில் வாஸத்தில் கொஞ்சம்கூட ஸுகமில்லாமல் துக்கத்தையே அனுபவிக்கிறார்கள். இவ்வுலக வாழ்க்கையிலோ ஸுகமும் துக்கமும் கலந்துவருகின்றனவே. ஸுகத்தையே அதிகமாக அனுபவிக்கின்ற செல்வந்தர்களும் இருக்கிறார்களே. எவ்விதம் இதை ஜெயில் வாஸத்திற்கு ஒப்பிடலாம்'' என்று. உண்மை தான். ஆனால் சிறைவாஸம் இரண்டு விதமிருக்கிறது. திருட்டு, கொலை முதலிய குற்றம் புரிந்து செல்வது ஒன்று. வாங்கிய கடனை திருப்பிக் கொடுக்காததால் சிறைசெல்வது மற்றொன்று. முதலாவது கொடும் துன்பங்கள் நிறைந்ததுதான். அதுபோலவே இவ்வுலகிலும் பிறந்தது முதல் ஸுகத்தையே காணாது துக்கத்தை மட்டும் அனுபவிக்கிறவர்களுமிருக்கிறார்கள். இரண்டாவது ஸௌம்யமானது. தன்னிஷ்டப்படி வெளியில் சென்று வருவதற்கு கட்டுப்பாடுகளிருந்தாலும் அவனவனுடைய ஐச்வர்யத்திற்குத்தக்கபடி

வாழ்க்கை வஸதிகள் கிடைக்கும். இதுபோலவேதான் இவ்வுலகிலும் சிலர் ஸுகத்தையும் பெறுகின்றனர். இரண்டுவிதமான ஜெயில் வாஸமும் விவேகிகளான மானிகளுக்கு பயத்தையும் துக்கத்தையும் கொடுக்கும். அதனால்தான் அவர்கள், "வாங்கின கடனைத்திருப்பிக் கொடுக்காவிட்டால் உன்னை ஜெயிலில் வைத்து விடுவேன்" என்று கடன் கொடுத்தவன் சொன்னமாத்திரத்திலேயே பயந்து நடுங்கியவர்களாய் கடனைத் திருப்பிக்கொடுக்க தீவ்ர முயற்சி எடுத்துக் கொள்கிறார்கள். இதுபோலவே பரிசுத்த மனமுள்ள சில மஹான்கள் பணம் முதலிய ஸுகஸாதனப் பொருள்கள் நிறைந்தும் இதில் வைராக்யம் கொண்டு செல்கின்றனர். அதனால் இவ்வுலகவாழ்க்கையை ஜெயில் வாஸத்திற்கொப்பிட்டது யுக்தம்தான். மானமிழப்பதைக் கண்டு பயப்படாத சில அல்பர்கள் ஏதாவது குற்றத்தைச்செய்து ஜெயிலுக்கும் சென்று உத்ஸாஹமாகவே இருப்பதைப் பார்த்து நாமும் அவ்விதமிருக்கலாம் என்று எண்ணக்கூடாது.

இவ்வாறு பல உதாஹரணங்களாலும் அநுபவத்தாலும் ஜெயிலுக்கு ஒப்பாக தீர்மானிக்கப்பட்ட இஹலோகத்தில் நாம் விரும்பும் அழிவற்ற ஸுகத்தையும் அபயத்தையும் எவ்விதமடைய முடியும்? எந்த அறிவாளியாவது ஜெயில்வாஸம் மூலம் ஸுகத்தையும் அபயத்தையும் அடையவிரும்புவானா? இது மட்டுமா! இவ்வுலகப் பொருள்களிலிருந்து நாம் அடைவதாக நினைக்கும் ஸுகமும் உண்மையில்

ஸுகமாகாது. கையில் பொருள் கிடைத்ததும் அதை அடைவதற்காக இதுவரை பாடுபட்ட சிரமம் அடங்குவதும், அதிலுள்ள ஆசையால் உண்டான தாபம் நீங்குவதும் தவிற ஸுகம் என்பது தனியாக வேறென்ன இருக்கிறது? துக்கம் விலகுவதையே ப்ரமத்தால் ஸுகமென்று நினைக்கிறோம். இதையே பர்த்ருஹரி அழகாகக் கூறுகிறார் :—"தாகத்தால் வாய் உலர்ந்துபோனதும் அதைத்தணிக்க குளிர்ந்த தண்ணீரைக்குடிக்கிறோம். பசியைத் தணிக்க அன்னத்தை சாப்பிடுகிறோம். காமத்தீயை அணைப்பதற்கு தன் மனைவியை ஆலிங்கனம் செய்கிறான்.

இவ்விதம் தனக்கு ஏற்பட்ட வியாதியை நீக்கும் விஷய ஸேவையை புத்தி மோஹத்தால் ஸுகமென்று நினைக்கிறான்.அது மட்டுமா! இவ்விதம் ஸுகத்தை கொடுப்பதாக நாம் நினைக்கும் அந்த விஷயங்களும் நம்பத்தகுந்ததாயில்லை. ஏனெனில் அவைகள் நம்முடைய பூர்வ கர்மாவை அநுஸரித்து நம்மிடம் கொஞ்ச காலமோ நீண்ட காலமோ இருந்துகொண்டு நமக்கு அநுராகத்தை யுண்டுபண்ணி அதை விட்டுப் பிரிந்து ஒரு நிமிஷமும் நம்மால் ஜீவிக்க முடியாதென்ற நிலைமையை ஏற்படுத்தி, வஞ்சகன் கூடவே வந்து நடு வழியில் சொல்லிக்கொள்ளாமல் பிரிந்துசென்று நம்மைக் கைவிடுவதுபோல் நம் விருப்பத்தைக் கேளாமலே விஷயங்களும் நம்மைவிட்டுப் பிரிந்து மிகுந்த தாபத்தைக் கொடுக்கின்றன. இதை நன்கு அறிந்து அதிக ஆசை வைக்காமல் புத்திபூர்வமாக முன்னு

லேயே விஷயங்களை த்யாகம் செய்பவன் மிகுந்த ஸுகத்தை அடைகிறான்.

இதையே ஸ்ரீ பகவத்பாதரும் பர்த்ருஹரியும் மிகத் தெளிவாகக் கூறுகிறார்கள். "கவனக் குறைவால் கையிலிருந்து பணம் நழுவிக் கீழே விழுந்துவிட்டால் அது மிகுந்த சோகத்தைக் கொடுக்கிறது. அதையே ஸத்பாத்ரத்தில் கொடுத்தோமானால் மனதிற்கு ஸந்தோஷத்தையும் பரலோகத்தில் சிரேயஸ்ஸையும் கொடுக்கிறது. அதுபோல் விஷயங்கள் எவ்வளவு நாள் நம்மிடமிருந்தாலும் ஒரு நாள் நம்மை விட்டுப் பிரிந்துதான் போகும். நமக்கு துக்கத்தையும் கொடுக்கும். நாமாக த்யாகம் செய்தால் நமக்கு ஸுகம்".

அதோடுமட்டுமோ! விஷயங்களை நன்கு ஆராய்ந்து பார்த்தோமானால் அவைகள் ஸ்வப்னத்தில் தோன்றும் பொருள்போல உண்மையல்ல என்று புலப்படும். "முன்னாலும் பின்னாலும் இல்லாமல் நடுவில்மட்டும் தோன்றும் பொருள் உண்மையல்ல" என்று கீதாசார்யரும் கௌடபாதாசார்யரும் கூறுகிறார்கள். இங்கு ஓர் சங்கை உண்டாகலாம். ஜாக்ரத் பொருள்கள் பலமுறைகளில் நமக்குப் பயன்படுகின்றன, வெகு காலமிருக்கின்றன. ஸ்வப்னப்பொருள்கள் விழித்துக் கொண்ட பிறகு ஒரு விதத்திலும் நமக்கு உபயோகமாகிறதில்லையே. ஆனதால் ஸ்வப்னத்திற்கு ஸமமாக எவ்விதம் ஜாக்ரத்பொருள்களைக் கூறலாம்? என்று. ஸமாதானம்—ஜாக்ரத்பொருள்கள் அந்த அவஸ்தை

யில் பயன்படுவதுபோல ஸ்வப்னப்பொருள்களும் ஸ்வப்னுவஸ்தையில் நன்கு பயன்படுகின்றன. ஸ்வப்னப்பொருள் ஜாக்ரதவஸ்தையில் பயன்படாதது போல ஜாக்ரத் பொருள்களும் ஸ்வப்னுவஸ்தையில் பயன்படுவதில்லை. அந்தந்த அவஸ்தைகளில் மட்டும் பயன்பட்டு மற்ற அவஸ்தைகளில் பயன்படுவதில்லை என்பது இரண்டுக்கும் ஸமம்தான்.

இவ்விதம் இரண்டும் பொய்யாயிருந்தபோதிலும் சாஸ்திரங்களிலுள்ள விதி நிஷேதங்களெல்லாம் ஜாக்ரத்வியவஹாரங்களை ஒட்டியிருக்கிறபடியால் பரம புருஷார்த்தமான மோக்ஷத்தை அடைய அவை ஸாதனமாயிருக்கிறது. ஸ்வப்ன வியவஹாரம் அப்படியில்லை. ஆகவே கார்யார்த்தமாக தேசாந்தரம் சென்றவன் அங்கே ஆகவேண்டிய கார்யங்களை சிக்கிரம் முடித்துக் கொண்டு தன் ஊர் செல்வதிலேயே எப்பொழுதும் கருத்துள்ளவனுக எப்படி இருப்பானே, அதுபோல இந்த லோகத்தை ஸொந்த இடமாகக்கருதாமல் வந்த இடமாக நினைத்து ஸொந்த இடமான மோக்ஷத்திற்குச் செல்லவேண்டிய வழிகளை அனுஷ்டித்துக் கொண்டு அங்கு செல்வதிலேயே கருத்துள்ளவர்களாயிருக்க வேண்டும்.

இதுவரை இஹலோகவாஸம் பலவித துக்கம் நிறைந்துள்ளதால் ஜெயில் வாஸத்திற்கொப்பானது என்று கூறப்பட்டது. வியாதி நீங்கி ஸ்வஸ்தனுக ஆவதற்கு வேண்டிய ஸாதனங்கள் ஆஸ்பத்திரியில் இருப்பதுபோல் ஸகல துக்கங்களும் விலகி சாச்வத

ஆனந்தத்தை அடைவதற்கு வேண்டிய ஸாதனங்கள் நிறைந்திருப்பதால் இதை பெரிய வைத்யசாலைக்கு ஒப்பாகவும் சொல்லலாம். வியாதியுள்ளவர்கள் அருகிலிருக்கும் ஆஸ்பத்ரியை உபயோகப்படுத்திக் கொண்டு அதன் மூலம் ஸ்வாஸ்த்யம் அடைவதுபோல நாமும் நமக்குக்கிடைத்த பிறவியை உபயோகித்துக் கொண்டு சிரேயஸ்ஸை அடைய முயற்சிக்க வேண்டும்.

நீண்ட ரோகமுள்ளவர்கள் பிணியின் துன்பம் பொறுக்க முடியாமல் "எப்பொழுது எப்படி இந்த வியாதியிலிருந்து விடுபடுவோம்? அவ்விதம் நமக்கு எந்த மஹாபுருஷன் உதவி செய்யப்போகிறார்" என்று கவலையுறும்பொழுது ஆப்த நண்பர் ஒருவரால் பெரிய ஆஸ்பத்திரிக்கு அழைத்துச் செல்லப்பட்டு அங்குள்ள பெரிய டாக்டருக்குட்பட்டு அவர் கூறிய பத்ய முறையைக் கைக்கொண்டு அவர் கொடுத்த மருந்தையும் அநுபானத்தையும் ஸேவித்துக்கொண்டு பிணி நீங்கும் முறைகளிலேயே கவனமுள்ளவர்களாக எப்படி இருப்பார்களோ, அதுபோல நாமும் மாயை என்னும் தோஷத்தால் ஏற்பட்ட பந்தம் என்ற ரோகத்தை நீண்ட நாளாக அநுபவித்துக்கொண்டிருக்கிறோம். கர்ப்பத்தில் வஸிக்கும்பொழுது எல்லோருக்கும் எப்படியாவது இதிலிருந்து விடுபட வேண்டுமென்ற எண்ணம் உண்டாகிறது. அதன் பிறகும் மிகுந்த சங்கடமான ஸமயங்களிலெல்லாம் "இந்த எல்லாக் கஷ்டங்களும் விலகி எப்பொழுது ஸுகமாயிருப்போம்" என்ற எண்ணம் உண்டாகிறது.

பெரிய வைத்யசாலைக்கொப்பான இந்த லோகத்தில் நமக்கு மிகவும் ஆப்தரான ஸர்வேசுவரன்தான் நம்மைக் கொண்டு விட்டிருக்கிறார். நம்முடைய பாக்ய வசத்தால் அவரே இந்த வைத்யசாலையில் ப்ரதான வைத்யராகவும் இருக்கிறார். அவர் நம்மிடமிருந்து ஒன்றும் எதிர்பாராதவராகவும் அவாப்தஸமஸ்தகாமராயும் நித்யதிருப்தராகவுமிருக்கிறார். அவரே ப்ரதானரான முதலாவது தேவ வைத்யர் என்று சுருதி கூறுகிறது. அந்த ஸர்வேசுவரனால் பரம கிருபையால் நம்முடைய பந்தம் என்ற வியாதி நீங்குவதற்காக இங்கு அனுப்பப்பட்டிருக்கிறோம் என்பதை மட்டும் ஒவ்வொரு க்ஷணமும் நாம் நினைத்துக்கொண்டு அவரால் உபதேசிக்கப்பட்ட ஸ்வதர்மம் என்ற பத்யத்தை சரிவர அனுஷ்டித்துக்கொண்டு நமக்கு ஏற்படும் ஸுகத்தை அவரால் கொடுக்கப்பட்ட இனிப்பான மருந்தாகவும், துக்கத்தை கசப்பு மருந்தாகவும் புத்ர மித்ர களத்ராதிகளையும் சப்த ஸ்பர்சாதிகளையும் மருந்துக்கு அனுபானமாகவும் எண்ணி கிடைத்ததை விருப்பு வெறுப்பில்லாமல் அனுபவித்துக்கொண்டிருக்கவேண்டும். இவ்விதமிருப்பதுதான் புத்திமான்களுக்கு அழகு.

பெரிய ஆஸ்பத்திரியில் சின்ன டாக்டர்கள் பலர் நோயாளிகளுடன் நெருங்கிப்பழகி அவர்களுக்கு வேண்டியதை எடுத்துக் கூறுவதுபோல ஜகத்குருவான ஆசார்யர்களும், மஹரிஷிகளும் அவர்களைப் போன்ற மஹான்களும் நம்மிடையே தோன்றி நமக்கு

உபதேசம் செய்கிறார்கள். அவர்களைத்தேடிச்சென்று நம் ஸந்தேஹங்களையும் விபரீத ஞானத்தையும் போக்கிக்கொள்ள வேண்டும். வைத்யசாலையிலுள்ள நோயாளிகள் அவரவர்களுக்கு கொடுக்கப்பட்ட மருந்தையும் அனுபானத்தையும் பத்யத்தையும் ஸேவிப்பார்களே தவிர பிறருக்குக் கூறப்பட்டதை வைத்யருடைய அனுமதியில்லாமல் ஒருநாளும் ஸேவிக்க மாட்டார்கள். இவர்களுக்கு எது ஹிதமென்பதும், ரோகத்தின் நிதானமும், அதை அனுஸரித்து மருந்துகளின் விபரமும் அதைச் சேர்க்கும் விதமும் வைத்யரைத் தவிற வேறுயாருக்கும் தெரியாது. இதுபோல சாஸ்திரம்தான் நமக்கு ஹிதாஹிதங்களை உபதேசிக்கிறது. அதன் உதவியில்லாமல் நம் புத்தியைமட்டும் கொண்டு வருங்கால ஹிதத்தை அறிந்து கொள்ள முடியாது. கீதையில் பகவானும் "முதலில் அம்ருதம் போலிருப்பது பின்னால் விஷம் போலாய்விடும். முதலில் விஷம் போலிருப்பது பின்னால் அம்ருதம் போலாகும்" என்று கூறுகிறார். சாஸ்திரம் தான் வைத்யருக்கொப்பான ஈசுவரனுடைய அநுமதி. அதில் அவரவருக்குக் கூறப்பட்ட ஸ்வதர்மம் என்ற பத்யத்தைத்தான் அவரவர் அனுஷ்டிக்க வேண்டும். பிறருடைய தர்மத்தை ஒருபொழுதும் அனுஷ்டிக்கக்கூடாது. அபத்யம் போன்றதான அதர்மத்தையும் அனுஷ்டிக்கக்கூடாது.

மேலும் வைத்யசாலையில் நோயாளிகள் மருந்து கசப்பாயிருந்தாலும் இனிப்பாயிருந்தாலும் ஒரேவித எண்ணத்துடன் உத்ஸாஹத்தோடு ஸேவிக்கிறார்கள்.

ஏன்? மருந்தை சாப்பிடும்பொழுது கஷ்டமாயிருந்தாலும் பின்னால் வியாதியை அடியோடு போக்கும் என்ற எண்ணத்தால்தான். அதுபோலவே துக்கத்தை அனுபவிக்கும்பொழுது பாபம் தொலைகிறது என்றும் ஸுகத்தை அனுபவிக்கும்பொழுது புண்யம் குறைகிறது என்றும் எண்ணவேண்டும். புண்யம் பாபம் இரண்டுமே நமக்கு பந்தத்தைக் கொடுப்பதால் ஸுக துக்கானுபவங்களால் பந்தம் நீங்குகிறது என்று எண்ணி ஸந்தோஷமாக இருக்கவேண்டும்.

வைத்யசாலையிலுள்ள விலையுயர்ந்த மருந்துகளையெல்லாம் டாக்டர் தனக்குக்கொடுக்கவில்லையென்றோ அதை சாப்பிடுவதற்கு தனக்கு பாக்யமில்லையென்றோ எண்ணி நோயாளிகளில் யாரும் வருந்துவதில்லை. அந்த மருந்தை சாப்பிடுவதற்காக யாரும் வியாதியை வரவழைத்துக்கொள்வதில்லை. வியாதியை வளர விடுவதுமில்லை. அதுபோல நமக்கு ஏற்படும் ஸுகத்தையும் துக்கத்தையும் நம் வியாதி நீங்க ஈசுவரனாகிய வைத்யரால் கொடுக்கப்பட்ட மருந்து என நினைக்க வேண்டும். பிறரிடமுள்ள விபவங்களோ, ஸுகபோகங்களோ நமக்கு ஏற்படவில்லையே என்று வருந்தக்கூடாது. பர்த்ருஹரி கூறியுள்ளபடி ஸாதுக்களின் லக்ஷணமான நற்குணங்களை நாமும் கைக்கொள்ள வேண்டும். அப்பொழுது பிறரிடமுள்ள ஐச்வர்யங்களைக் கண்டு ஆசை ஏற்படாது.

ஆரம்பம் முதல் இதுவரை கூறப்பட்ட விஷயங்களை எல்லாம் ஒருதடவை கேட்ட மாத்திரத்தில்

அனுஷ்டானத்திற்கு கொண்டுவருவது சற்று சிரமம் தான். வைராக்யமும் அவ்வளவு எளிதாக வந்து விடாது. இதற்காக கையில் கிடைத்த ஸுகத்தை எப்படித் தள்ளமுடியுமென்று கேட்கலாம். ஆனாலும் இந்த உலகம் ஜெயிலுக்கொப்பானதென்றும் வைத்ய சாலைக்கொப்பானதென்றும் முன் கூறிய விஷயத்தை ஞாபகத்தில் வைத்துக்கொள்ள வேண்டும். இரண்டு விதத்திலும் இதிலிருந்து வெளிக்கிளம்பவே நாம் எப்பொழுதும் முயற்சிக்க வேண்டுமென்பதில் கொஞ்சமும் ஸந்தேஹமில்லை. குற்றம் செய்தபோதிலும் புத்தியுள்ளவன் ஒருவனாவது தன் ஆயுள் முழுவதும் ஜெயிலிலேயே வாஸம்செய்ய விரும்பமாட்டான். இதுபோலவே நோயாளியும் வைத்யசாலையிலேயே இருக்க ஆசைப்படமாட்டான்.

இவ்விதம் ஜெயிலுக்கும் வைத்யசாலைக்கும் ஒப்பான இதிலிருந்து வெளிக்கிளம்புவதற்கு இந்த மனுஷ்ய ஜன்மா தான் மிகவும் உபயோகமானது. இது ஸுலபமாகக் கிடையாது. காஷ்மீர தேசம் போல இது ஸாரமான க்ஷேத்ரம். இதில் நல்ல விதையை விதைத்தோமானால் மோக்ஷமென்ற பழத்தைக் கொடுக்கும். ஆகையால் நமக்குக் கிடைத்த இந்த மனுஷ்ய ஜன்மா வீணாகாமலிருப்பதற்காக, தர்மத்திற்கு விரோதமில்லாமல் கிடைத்த போகங்களை ஸந்தோஷமாக அனுபவிப்பது, ஸ்வதர்மத்தை விடாமல் அநுஷ்டிப்பதில் மிகுந்த முயற்சி எடுத்துக்கொள்வது, தேவபித்ரு கார்யங்களை சரிவர அனுஷ்டிப்பது,

ஸாதுக்களிடம் காணப்படும் குணங்களை அடைவதில் ஈடுபடுவது முதலிய கார்யங்களை அவசியம் செய்ய வேண்டும்.

இந்த விஷயங்களை யெல்லாம் கேட்ட நமக்கு மனதில் ஓர் எண்ணம் தோன்றலாம். “உண்மை தான்! சொன்ன விஷயங்களெல்லாம் என்னவோ ரொம்பவும் நன்ருகத்தானிருக்கிறது. வெளியில் வாடகைக்கு வீடே கிடைக்காத காலத்தில் நாமாகவே நம் வீட்டில் குடியிருக்கும்படி வைத்துக் கொண்ட துஷ்டரை வீட்டிலிருந்து எப்படி வெளிக்கிளப்ப முடியாதோ அது போலவே அதர்மம் நிறைந்துள்ள இக் காலத்தில் தானுகவே நம்மிடம் புகுந்துள்ள அச்ரத்தை ஆலஸ்யம் முதலியவைகளை விரட்டமுடியவில்லையே. அவைதான் எந்த நற்கார்யங்களைச் செய்வதற்கும் இடைஞ்சலாக இருக்கிறது. நாம் என்ன செய்யலாம்” என்று. வாஸ்தவம் தான். இந்த எண்ணம் ஏற்படுவது நல்லது தான். ஆனல் இது உண்மையானது தானு அல்லது வெளிவேஷமா என்பதை ஆராய வேண்டும். உண்மையாகவே ஏற்பட்டால் நல்ல கார்யங்களில் செல்லவொட்டாமல் செய்கின்ற சோம்பல் முதலியவைகளை விரட்ட முதலில் முயற்சி எடுத்துக் கொண்டிருப்போம். அவ்விதமுயற்சி எடுத்துக்கொள்வதில்லை. அதனல் இது வெளிவேஷம்தான் என்று தெரிகிறது. இதனல் ஆலஸ்யம் முதலியவைகளுக்கு ஒரு குறைவும் இல்லை. நமக்குத்தான் புருஷார்த்த ஹானி உண்டாகும். ஆனதால் யதார்த்தமாய் அந்தரங்கமாக உள்

மனத்தில் அனுதாபம் ஏற்பட வேண்டும். அப்பொழுது பாபங்களும் தொலையும்.

மேலும் த்ருஷ்டபலமான லோகவியவஹாரத்தில் சோம்பல் முதலியவைகளை உதறித்தள்ளி மிகுந்த உத்ஸாஹத்துடன் ஈடுபடுகிறோமே. அதற்கு என்ன காரணம்? அதன் பலன் நேரில் காணும்படியாயிருப்பதால் அதை அடைய வேணுமென்ற தீவ்ர இச்சை தான் காரணம். உண்மையில் அத்ருஷ்ட பலமான வைதிக வியவஹாரத்திலும் இதைவிட இன்னும் அதிகமான உத்ஸாஹத்துடன் ப்ரவர்த்திப்பதுதான் உசிதம். ஏனெனில் அதிருஷ்ட ஸாமக்ரி தான் த்ருஷ்டபலத்தை நம்மை அனுபவிக்கும்படி செய்கிறது. அதற்கு ஸாதனமான வஸ்துக்களையும் நம்மிடம் சேர்த்து வைக்கிறது. ஆகையால் லோக வியவஹாரத்தில் போல வைதிக வியவஹாரத்திலும் அச்ரத்தை, சோம்பல் முதலியவைகளை விட்டு மிகுந்த உத்ஸாஹத்துடன் ஈடுபட வேண்டியது ரொம்பவும் அவசியம்.

இவ்விதம் விழித்துக் கொண்டிருக்கும் பொழுதும் ஸ்வப்னம் காணும்பொழுதும் ஒவ்வொரு நாளும் லௌகிகமாயும் வைதிகமாயுமுள்ள வியவஹாரங்களில் இடைவிடாது ஈடுபட்டு மனது இந்திரியங்கள் எல்லாம் சோர்ந்துபோய் விச்ராந்தியைப் பெறுவதற்காக ஸுஷுப்தி என்ற அவஸ்தைக்குச் செல்லுகிறோம். அங்குதான் நிரதிசயமான ஸுகத்தை அனுபவிக்கிறோம். காலையில் தூங்கி எழுந்திருந்தவுடன்

"ராத்திரி ஸுகமாகத் தூங்கினேன்" என்று நினைத்துக் கொள்கிறோம். ஸுஷுப்தி அவஸ்தையில் ஸுகத்தை அநுபவிக்காவிட்டால் காலையில் இந்த நினைப்பு ஏற்படாது. அந்த ஸுகம்தான் நம்முடைய உண்மையான ஸ்வரூபம். அது ஸச்சிதானந்த வடிவமானது. "தன் நிலைமையை அடைந்திருக்கிறான்" என்றும் "ஆத்ம ஸ்வரூபத்துடன் ஒன்றாகக் கலந்திருக்கிறான்" என்றும் உபநிஷத்துக்கள் கூறுகின்றன. அது ஒன்று இருப்பதால்தான் நாம் மூச்சுவிடமுடிகிறது. எல்லாக் காரியங்களும் நடைபெறுகின்றன. அதிலிருந்துதான் பிரபஞ்சத்தின் ஸ்ருஷ்டி ஸ்திதி ஸம்ஹாரங்கள் ஏற்படுகின்றன. அவரிடம் பயத்தால்தான் ஆதித்யன் முதலானவர்கள் தங்கள் தங்கள் காரியங்களை முறைவழியில் இடைவிடாது நடத்திக்கொண்டு வருகிறார்கள். அவரை நன்கு அறிவதற்காகத் தான் எல்லா உபநிஷத்துக்களும் ஏற்பட்டிருக்கின்றன. அந்த ஸ்வரூபத்தை அடைந்தால்தான் நாம் விரும்பும் பயமில்லாத சாஸ்வதமான பேரானந்தம் கிடைக்கும்.

முன் சொன்னபடி ஸுஷுப்தி ஸுகமே பேரானந்தமாகுமானால் அது தானாகவே ஒவ்வொருவருக்கும் கிடைத்துவிட்டபடியால் விழித்துக்கொண்ட பிறகு மறுபடியும் தூக்கமும் பயமும் எவ்விதம் ஏற்படலாம் என்று கேட்கக்கூடும். ஆனால் இங்கு ஒரு விஷயம் தெரிந்துகொள்ள வேண்டும். முக்தியில் நமக்குக் கிடைக்கும் ஸ்வரூப ஸுகம் ஏற்கெனவே இல்லாமல்

புதிதாக அடையப்படுவதல்ல. நம்மிடம் இருப்பதை யேதான் மறுபடியும் அடைகிறோம். திருஷ்டாந்தமாக ஒருவன் தன் கழுத்தில் ஆபரணம் இருப்பதை மறந்து எங்கோ தொலைந்து போய்விட்டது என்ற ப்ரமத் தால் வெளியில் எங்கும் தேடி கிடைக்காமல் மிகுந்த துக்கத்தை அனுபவிக்கிறான். அதுஸமயம் நண்பன் ஒருவன் தைவ வசமாக அங்கே வந்து விஷயத்தைத் தெரிந்துகொண்டு "எதை கெட்டுப்போனதாக நினைக் கிறாயோ அந்த ஆபரணம் உன் கழுத்திலேயே இருக் கிறதே" என்று கூறுகிறான். அவனுடைய வார்த்தை யைக் கேட்டமாத்திரத்தில் தொட்டுப் பார்த்து கழுத் தில் இருப்பதைத் தெரிந்துகொண்டு, புதிதாக அந்த நகையை அடைந்ததுபோலவும், நஷ்டமான பொருள் திருப்பிக் கிடைத்தது போலவும் எண்ணி மிகுந்த ஆனந்தமடைகிறான். தனக்குக் காட்டிக்கொடுத்த அந்த நண்பனை மிகவும் கொண்டாடுகிறான். அது போலவே ஸ்வரூப ஸுகமும் நம்மிடம் எப்பொழுதும் ஸித்தமாயிருந்தாலும் அக்ஞானத்தால் நம்மிடம் இல் லாதது போலவும், ஞானத்தால் புதிதாக அடைந்தது போலவும் நினைக்கிறோம். ப்ரம ஸ்தலங்களிலெல்லாம் அக்ஞானத்தால் வஸ்துவின் மறைவும் ஞானத்தால் வஸ்துவை அறிந்துகொள்வதும் தவிற வேறுவிதமாக நிருபணம்செய்ய முடியாது. ஸுஷுப்தியில் ஸ்வரூப ஸுகாநுபவம் இருந்தாலும் அக்ஞானத்தால் அதை அடையவில்லை. காலையில் விழித்துக்கொண்டதும் 'ராத்திரி நன்றாகத் தூங்கினேன். ஒன்றும் தெரி

नावीकृत्य पादचारेणैव आगन्तुं गङ्गां अवतीर्य तदानीमेव गङ्गा-प्रदर्शितपद्मेषु पदानि विन्यस्य गुरुसमीपमागतवान् । गुरुवरोऽपि हृष्यन् पद्मपाद इति नाम ददौ । एवमितरेषां तद्भक्त्यतिशयं ख्यापयामास । शिष्याश्च अनसूयवः पद्मपादभक्तिमहिमाभिज्ञाः भक्तिपरवशा बभूवुः ॥

॥ सप्तमसर्गकथा ॥

एवं कदाचित् गङ्गातीरे भाष्याध्यापनसमाप्तिवेळायां श्रीव्यासाचार्यः वृद्धब्राह्मणरूपेणागत्य गुरुवरं 'किमध्यापयसि' इत्यादि पप्रच्छ । पद्मपादादयः अस्मद्गुरुः सूत्रभाष्यादिकर्ता सर्वतन्त्रस्वतन्त्रः इत्येवमादि निवेदितवन्तः । भवतु एकस्य सूत्रस्य वापि समीचीनार्थविवरणं श्रोतुमिच्छामि इत्युक्तेन गुरुवरेण 'नाहं सूत्रार्थवित्; तदहन्ताऽपि नास्ति मम । सूत्रार्थ-विद्भ्यो नमोऽस्तु । अथापि यत्किञ्चित् पृष्टश्चेत् यथाशक्ति वदामि' इत्युक्तम् । तदानीं तदन्तरविकरणमधिकृत्य पृष्टम्, प्रत्युक्तं च । एवं क्रमेण वादः प्रवृद्धः । अष्ट दिनानि अतीयुः । तदवसरे पद्म-पादोक्त्या व्यासोऽयमिति अवगत्य तत्प्रत्यक्षदर्शनाय प्रार्थितवान् । प्रत्यक्षीभूय व्यासमहर्षिरपि तद्वचनजातमभिनन्द्य शुकमहर्षिवत् नितरां प्रीतिमावहन्तः तव भाष्यदर्शनार्थमागमनं इत्युक्तवान् । भाष्यकरणसाहसं सोढ्वा तत्समीकरणं च प्रार्थयन् श्रीगुरुः भाष्यं प्रदर्शितवान् । महर्षिरपि हस्तद्वयेन भाष्यमादाय समग्रं वीक्ष्य सूत्रार्थवर्णनशैलीपूर्वोत्तरपक्षयोजनचातुर्यादिना परं मोदमानः

अतिगूढभावसूत्रार्थाविष्करणचतुरं एतादृशभाष्यं विधातुं त्वामृते को वा प्रभवति इत्येवमादि उक्त्वा श्लाघयन् प्रतिष्ठासुर्बभूव ॥

तदानीं श्रीगुरुः मम अवतारकार्यं परिपूर्णम् । देहत्यागाय मणिकर्णिकायां स्वल्पकालं सन्निधातव्यम् इति प्रार्थयामास । तदानीं व्यासाचार्यः 'न एवं कर्तव्यं । सन्त्यनिर्जिताः पण्डितप्रवराः । तेषां विजित्यै अद्वैतमतस्य रूढमूलतासिद्ध्यै मोक्षसाधनविवेक-वैराग्यमुमुक्षादिप्रसिद्ध्यै च कञ्चित्कालमुषित्वा प्रयातव्यम् । अन्यथा अतिबाल्ये मातृविसृष्टशिशुवत् मोक्षसाधनादि न प्रसि-द्ध्येत् । अतः तदर्थं प्रसन्नेन मया श्रीपरमेश्वराज्ञया षोडश वर्षांसि दत्तानि । भाष्यं च भुवि प्रचरिष्यति ।' इत्याद्युक्त्वा अन्तर्दधे । महर्षिविरहं च कथञ्चित्सहमानः भाष्यस्य कुमारिलभट्टेन वार्तिकानि कारयितुमनाः प्रयागक्षेत्रं प्राप ॥

तत्र त्रिवेण्यां स्नानवेलायां कृतबहूपकारां सोढबहुदुःखां मातरमपि स्मरन् स्नात्वा जपादिवेलायां श्रीकुमारिलभट्टस्य तुषाग्निप्रवेशवृत्तान्तश्रवणेन खिन्नः शीघ्रं तत्समीपमागतवान् । दृष्टवांश्च साश्रुमुखैः प्रभाकरादिशिष्यवरैः परीतं तुषानलेन दह्यमानशरीरं दृश्यमानमुखमात्रं श्रीभट्टपादम् । सोऽपि चिरकालं गुरुवरस्य विचित्रवृत्तान्तं श्रावं श्रावं मोदमानोऽपि न दर्शन-मुपेयिवान् । तद्दर्शनमात्रेण परमानन्दमनुभवन् प्रभाकरादि-शिष्यगणैः वरिवस्यां कारयामास । श्रीगुरुश्च भिक्षादिकं निर्वर्त्य

भाष्यमस्मै प्रदर्शयामास । भाष्यदर्शनेन दृष्टान्तरङ्गः 'भो वरेण्य भवदीयाध्यासभाष्यमात्रस्य अष्टौ सहस्राणि वार्तिकानि भान्ति । यदि पूर्वमेव अद्रक्ष्यं तर्हि वार्तिकान्यपि अकरिष्यम् । यशश्च विपुलं अप्राप्स्यम् । किमिदानीं तदुक्त्या ? न तु तद्भाग्यमासीत् । अथापि एतादृशसन्दर्भे अतिदुर्लभमहनीयदर्शनादधिकं किमस्ति भागधेयम् तल्लाभाद्धन्यतमोऽस्मि । कृतदीक्षश्चाहमिदानीं । एतत्प्रायश्चित्तनिमित्तं च पूर्वं सौगतगुरुमुखात् तन्मतरहस्यं विज्ञाय तस्यैव निग्रहणं कृतम् । एकाक्षरप्रदातुरपि गुरुत्वे किमु वक्तव्यं तस्य । तादृशगुरुद्रोहनिवृत्तये गिरिशिखरात् पतनवेळायां यदि वेदाः प्रमाणमिति यदिशब्दप्रयोगात् कर्मण एव फलदातृत्वव्यवस्थापनाय ईश्वरनिरासस्य कृतत्वात् तद्दोषनिवृत्तये च विहितामेतां प्रायश्चित्तिमाचरामि । यदि पूर्वमेव महनीयदर्शनं स्यात् स्यात्सैव महती प्रायश्चित्तिः । न चैतदाचरेयं तदा । इदानीं तु तत्र विगुणं सम्पन्नं इत्युक्तवान् ॥

ततः गुरुः 'भो मनीषिन् भवान् वैदिककर्ममार्गप्रतिष्ठापनाय तद्विरोधिशिक्षणाय च अवतीर्णः साक्षात्स्कन्द एव । तादृशस्य तव पातकं वा प्रायश्चित्तं वा कुतः । अतः करकाम्बुसेचनेन त्वामुज्जीवयामि । कुरुष्व वार्तिकानि यथामनोरथम्' इति गुरुणा उक्ते सति चिरमृतस्यापि उज्जीवयितुः कालमृत्योरपि कालयितुः भवतः मदुज्जीवनं ईषत्करम् । अथापि लोकविरुद्धाचरणं आरब्धव्रतपरित्यागेन शिष्टगर्हणं च मा भूत् । अतः न एतं नियमं त्यक्तु-

मिच्छामि । यदि च ज्ञानमार्गप्रचाराय तद्विरोधिनः 'केवलकर्मैव फलदातृ, नातिरिक्त ईश्वरोऽस्ति। तत्कल्पनाऽपि विरुद्धा वृथा च इत्येवंरूपकर्ममार्गस्य प्रतिष्ठापयितुर्मम जयोऽपि अपेक्षितः तर्हि मदीयशिष्यमण्डनायमानालङ्कर्मीणवरमण्डनमिश्रविजयेनैव सर्वेऽपि जितास्स्युः । मत्तोपि अधिकस्सः । अतः शीघ्रं तत्र गत्वा तत्पत्नीं साक्षीकृत्य वादे विजित्य वशंवदीभूतेन तेनैव पूर्णमनोरथस्सन् भाष्यस्य वार्तिकान्यपि कारय । तारकोपदेशेन मां च तारय इत्युक्तवन्तं भट्टपादं सच्चित्सुखमयब्रह्मात्मतत्वोपदेशेन कृतार्थयित्वा तच्छिष्यमूर्तं मण्डनमपि कृतार्थयितुं तन्नगरं जगाम ॥

अष्टमसर्गकथा ।

अभ्रमार्गेण शुभ्रहृदयः माहिष्मतीं प्राप्य मण्डनगृहं च विचार्य मध्याह्नसमये श्राद्धदिनत्वात् पिहितकवाटगृहान्तराङ्गणं आकाशमार्गेण प्रविश्य श्राद्धे निमन्त्रिताभ्यां व्यासजैमिनिमहर्षिभ्यां दर्शनमात्रेण अभिनन्दितः तयोस्समीपे स्थितवान् । तयोः पादप्रक्षाळनं कुर्वन् महाकर्मठः सन्यासशास्त्रस्य अर्थवादत्वनिश्चयवान् मण्डनार्यः ज्ञानशिखोपवीतिनं यतिसार्वभौमं महर्षिमान्यं दृष्ट्वा तदसहमानः कुपितस्सन् कवाटपिधानवेळायां केन मार्गेण आगमनमिति आगमनमार्गं पप्रच्छ— 'कुतो मुण्डी' इति । कियत्पर्यन्तं वपनमिति प्रश्नार्थमादाय आचार्यः 'आगळान्मुण्डी' इति प्रत्युवाच । एवमुभयोः वक्रोक्तिपरम्परा प्रवृत्ता

तन्मध्ये व्यासाचार्यः 'नैवं दुर्भाषणमुचितं, विशेषतश्च कर्मकाले। आगतश्च आत्मवित्प्रवरः मान्यतमश्च । साक्षाद्विष्णुरेव आगत इति निमन्त्रय एनमपि इति वदन् वारयामास । तदाज्ञया उपस्पृश्य जलं प्रशान्तमनाः तथैव भिक्षायै निमन्त्रितवान् । गुरुश्च 'न मे अन्नभिक्षायामादरः, वादभिक्षार्थमेव आगतोऽस्मि । यतः सर्व-मतानि विजित्य ज्ञानकाण्डप्रकाशनमेव मम कर्तव्यं । तत्र भवतो विजयाय आगतोऽहम् । यदि जितोऽस्मीऽत्युच्यते मम मतं च अङ्गीक्रियते, तर्हि माऽस्तु वादः । नो चेत्प्रवर्तताम्, विजेतु-राश्रमस्वीकरणञ्च पणबन्धनं विधीयतां' इति हृदयमाविश्चकार ॥

तदानीं मण्डनार्यः 'फणिपतिं वा फणिपतिमण्डनं वा फणिपतिशायिनं वा विजेतुं निर्भीकस्य मम वदनात् जितोऽस्मीति भीरूक्तिः कथं प्रवर्तेत । चिरदिनेनेयं वादकथा स्वयमेव आगता मां प्रहर्षयति, त्वरयति च । अतोऽवश्यं दास्यामि वादभिक्षां । परन्तु जयपराजयनिर्णयार्थं साक्ष्यरथ्वं को निर्वाहिष्यति । नोचेत् वादेनापि वृथा श्रमस्समापद्येत' इति प्रतिबभाण । 'आवयोः भाग्यवशात् आगतौ तत्रभवन्तावेव साक्षिभावं भजेताम्' इति प्रार्थयति गुरौ 'एषा उभयभारती सर्वज्ञा । तां मध्यस्थां विधाय विधीयतां वादः' इति व्यवस्थितवन्तौ मुनिवरौ यतिवरञ्च अग्नि-त्रयमिव यथाविधानं अभ्यर्च्य कृतार्थीबभूव मण्डनार्यः । क्रियान्ते च कञ्चित्कालं संलपन्तौ महर्षिवरौ गुरुमामन्त्र्य अन्तर्हितौ ॥

परेद्यवि मण्डनार्यानुज्ञया अङ्गीकृतमाक्षिभावां पतिदेवतां उभयभारतीं पुरस्कृत्य वादः प्रवृत्तः। तत्र च स्वस्वसिद्धान्तं प्रादर्शयताम्। प्रतिदिनं कृत्वा आह्निकमारभेताम्। उभयभारती च प्रत्येकं कण्ठे मालां मध्यस्थां निधाय म्लानमालत्वं जयेतरनिश्चायकं इत्युक्त्वा पाकादिगृहकृत्यपरा सती मध्यन्दिनसमये भर्त्रे भोजनकालं यतिवराय भिक्षाकालं च निवेद्य यायात्। एवं पञ्चषदिनेषु अतीतेषु म्लानमालत्वं भर्तुरवेक्ष्य उभयोरपि भिक्षाकालं निवेदितवती उक्तवती च 'इदानीं त्वज्जयेन दुर्वासश्शापस्यावसानं मम समभूत्। अतः यथागतं गमिष्यामि' इति। गुरुश्च तदानीं तस्या अपि विजयेन स्वमतपूज्यतायै स्वसार्वज्ञ्यं प्रकाशयितुं तां विजेतुकामः वनदुर्गामन्त्रेण प्रस्थितां तां बन्धयन् 'मातस्त्वां गिरां परां देवतां जानामि, लोकोपकाराय कृतावताराञ्च। अथापि भक्तचूडामणेर्मम अनुज्ञामपि आदाय गन्तव्यमिति प्रार्थयामास॥

॥ नवमसर्गकथा ॥

श्रीमद्गुरुवरोक्त्या अद्वैते दृढनिश्चयोऽपि मण्डनार्यः 'भवतु मम पराजयः। नास्ति मे विषादः परन्तु सर्वज्ञस्य जैमिनिमहर्षेरपि वचनं वितथं भवतीति मे विषादः' इति पुनर्वदति स्म। 'भो मनीषिन्, महर्षेरपि तात्पर्यं अत्रैव गूढतया वर्तते। तत्तु न गृहीतं। तथाहि—निष्कामतया अनुष्ठीयमानकर्मणां चित्तशुद्ध्यादिवैराग्यद्वारा ब्रह्मज्ञानं प्रत्यारादुपकारकत्वात्तमेतमिति

वचनञ्च कर्मकाण्डस्य ब्रह्मपरत्वम् । अक्रियार्थानां आनर्थक्यवचनञ्च कर्मकाण्डाभिप्रायेण न तु ज्ञानकाण्डाभिप्रायेणापि । ईशनिराकरणस्यापि ईश्वरपरानुमाननिराकरणे तात्पर्यं । तार्किकाः खलु केवलानुमानादेव ईशसिद्धिः । तत्सिद्धञ्च तं श्रुतयः अनुवदन्ति इति वदन्ति । तदनुपपन्नम् 'नावेदविन्' इत्यादिश्रुतयः अवेदविदगोचरत्वं परमेश्वरस्य बोधयन्त्यः केवलानुमानगम्यत्वं निराकुर्वन्ति' इत्यादि बोधयन् गुरुः जैमिनिमहर्षिमपि सस्मार । तत्क्षण एव आगतो महर्षिरपि परतत्त्वबोधेन जगदुद्धरणाय कृतावतारपरमपुरुषरूपत्वेन गुरुमहिमानं वर्णयित्वा तदुक्तमेव मदीयहृदयमपि । तद्वचनमेव विश्वास्याहं इत्युक्त्वा अन्तरधात् ॥

मण्डनार्योऽपि विदितगुरुमहिमा गलितमतविशयः अत्युदारवचनैः गुरुं सम्मानयन् 'एषणात्रितयविनिर्मुक्तोऽहं तव चरणमेव शरणं गतोऽस्मि' इत्युपससाद । तत्काले गुरोः तदनुजिघृक्षाञ्च अवेत्य उभयभारती मध्ये बभाण—'भो यतिसार्वभौम, बाल्य एव मम वृत्तान्तमधिकृत्य मात्रा पृष्टः कश्चन योगिवरः सर्वमपि उक्त्वा पितामहावतारभूतो मम पतिः परमेश्वरावतारभूतेन यतिना पराजितो भविष्यति इत्यप्युक्त्वा गतवान् । तत्तथैव संवृत्तं । अथापि अर्धशरीरत्वात् मम विजयेनैव पतिः समग्रजितो भवेत् ।' इति ॥

गुरुश्च तदुक्तं बाढमित्यङ्गीकृत्य 'गार्ग्या याज्ञवल्क्यवत् भवत्या वादो न विरुध्यते । किञ्च स्वमतं निराचिकीर्षुः स्त्रीजनो वा

अन्यो वा स्वमतरक्षणाय जेतव्य एव' इति वादौचित्यं समर्थितवान्। श्रीगुरोरुभयभारत्याश्च पण्डितमन्दसि वादकथा प्रवृत्ता। सा च नियमकालमृते नक्तं दिवं अविरतं चचाल। एवं सप्तदशदिनेषु अतीतेषु श्रीगुरोः सर्वशास्त्रनिचयेषु अजय्यत्वं निश्चित्य बाल्य एव कृतसन्न्यस्तत्वात् अलुप्तनियमत्वात् अकृतकामतन्त्रपरिश्रमत्वात् तत्रैव जय्यत्वं निश्चितवती उभयभारती कामकलादिकमधिकृत्य पृष्टवती। तत्प्रश्नप्रतिसमाधानाय मासमात्रावधिमादाय सह शिष्यगणैः अभ्रमार्गेण प्रतस्थे ॥

तदा अमरवरस्येव दिवश्च्युतस्य अमरुकराजस्य शरीरं परासुं प्रविविक्षुम्मन् भक्तिपरवशतया पद्मपादाचार्येण मत्स्येन्द्रयोगिदृष्टान्तेन कामपरवशत्वव्रतभङ्गादिसम्भवप्रदर्शनेन निषेधे कृते तं एवं समादधानः 'वत्स सम्यगुक्तं त्वया। परन्तु असञ्जातमदशः निस्सङ्कल्पस्य न कामपरवशत्वं गोपीसखस्य गोपालस्येव सम्भवति। बिन्दुं मणिवत् दृढयन्तं वज्रोळियोगं अभ्यस्यतः गोपाळवत् न व्रतभङ्गो भवति। आत्मभिन्नं सर्वमपि स्वाप्निकतुल्यमेव पश्यतः निर्लेपस्य स्वाप्निकसुकृतदुष्कृतलेपाभाववत् सुकृतदुष्कृतलेपोपि न स्यात्। अतः निःशङ्कतया यावदागमनं अत्रैव गुहायां अप्रमत्तास्सन्तः देहमेतं रक्षत' 'इत्युक्त्वा पादाङ्गुष्ठादारभ्य शिरोमार्गेण योगशक्त्या प्राणवायुं निर्गमयन् स्थूलं विहाय अमरुकशरीरे शिरोमार्गेण प्रविश्य पादांगुष्ठतलपर्यन्तं व्याप्तस्सन् क्रमेण मुखहृदयनयनपाणिपादादि चालयन् उत्थाय

अहह्श्रमदाजनैः मन्त्रिवरैश्च सह भद्रगजमारुह्य वाद्यघोषेण नगरं प्रविश्य पुरोहितकृतशान्तिकर्मा यथावत् प्रजाः पालयामास ॥

॥ दशमसर्गकथा ॥

तदा गुरुर्नरपालनसमये 'प्रवृद्धसस्या वसुमती, प्राज्यफलाम्भस्तरवः, विहितस्वधर्मैरराः जनाः, कालवर्षी च पर्जन्यः, किं बहुना? कलिरपि त्रेतामतिशेते स्म । तथैव गुरुवरस्य विनरणातिशयबुद्धिकौशलातिमानुषधैर्यशौर्यादिकं च वीक्ष्य मन्त्रिवरैः, नूनं कश्चित् महापुरुष एवात्र प्रविष्टः, यथा चायं पूर्वशरीरं न प्रविशेत् तथा विधातव्यमिति रहसि निश्चित्य यत्र कुत्रापि स्थितं गतासुशरीरं दह्यताम् इति दूतेषु विसृष्टेषु, श्रीगुरुः आप्तमेषु मन्त्रिवरेषु निहितराज्यभारस्सन् किलिकिञ्चितादिविलासविशेषान् साक्षात्कर्तुमनाः, विलासिनीजनैः विलासमनुबभूव । वात्स्यायनतन्त्रं च सम्यगवेक्ष्य स्वयं च तत्तन्त्रमधिकृत्य ग्रन्थमेकं रचयामास ॥

अस्यामवस्थायां शिष्यप्रवराः मासातिक्रमेण गुरोरनागमनेन च क्लान्तहृदयाः श्रान्तकृत्याः सन्तः देहरक्षार्थं कतिचन शिष्यान्निधाय पद्मपादादयः प्रस्थिताः । प्रतिशैलं प्रतिनगरं च अन्विष्यन्तस्ते क्रमेणामरुकदेशमपि प्राप्य देशपौष्कल्येनैव निश्चितगुरुस्थितिका अपि, प्रसङ्गात् भूपतिमपि मृत्वा पुनरुत्थितं श्रुत्वा दृढनिश्चयास्सन्तः गायकवेषेण राजसभां

प्रविश्यान्यापदेशेन तत्त्वं बोधितवन्तः । तदा अवगतकृत्यः गुरुरपि पूर्ववत् निर्गत्य यतिलिङ्गशरीरं दूतविसृष्टपावकं विलोक्यान्तः प्रविश्य श्रीलक्ष्मीनृसिंहं तुष्टाव । तदनुग्रहेण शान्तदहनः शिष्यगणैः परिवृतः पुनरपि मण्डनगृहमवाप । मण्डनार्योऽपि मुदितमनास्सन् सर्वस्वं विहाय गुरुपादायैव स्वं निवेदितवान् । शारदाम्बा तु 'भो भो सर्वविद्याधिपस्य सर्वज्ञस्य तवाविज्ञातं किमस्ति । मर्त्यशिक्षणार्थं शिष्टसंप्रदायरक्षणार्थं च मासावधिः परकायप्रवेशो वा विडम्बितः । एवं सति पतिस्समग्रो जित इति किमाश्चर्यम् । अतः दीयतामनुज्ञा ; यास्याम्यात्मसदनं' इति आमन्त्रितवती सती 'गच्छ यथास्थानं सन्निधत्स्व आत्मकल्पितस्थानेषु । अभीष्टार्थान् योजय भक्तजनान् पालय इति गुरुणोक्ता सा तथेति संश्रुत्य प्रययौ । मण्डनार्योऽपि सर्वस्वदक्षिणां प्राजापत्येष्टिं निरुप्य आत्मन्यग्नीन् समारोप्य गुरुमुपसन्नः । गुरुरपि संन्यासगृह्योक्तकर्मजातमनुष्ठाय महावाक्यमुपदिश्य पदार्थवाक्यार्थौ वर्णयामास । गुरुमहिमानं गुरुभक्तेः मुख्यतां च बोधयामास । सुरेश्वर इति योगपट्टं च सर्वप्रसिद्धं विदधे । एवं शिष्यभूतमण्डनान्वितः महाराष्ट्रमुख्यदेशेषु स्वग्रन्थं प्रचारयन् क्रमेण श्रीशैलं प्राप्य कर्तव्यजातं उपदिशन्नास्त ॥

அநேகம் சிஷ்யர்களுக்குள் சமதமாதிஸம்பன்னர்களான ஸநந்தனர் முதலிய சிலர் மிகவும் முக்ய சிஷ்யர்களானார்கள். அதிலும் ஸனந்தனர் ஒருதடவை குரு

விடம் பாஷ்யம் வாசித்தபோதிலும் திருப்தியடையாமல் மிக கூடமான அர்த்தங்களை அறிந்து கொள்வதில் ஆசையால் மேலும் மேலும் வாசிப்பதில் ஆசையுள்ளவரானர் இவருடைய ஆவலேயும் பக்தியையும் பார்த்து சந்தோஷமடைந்து ஸ்ரீ சங்கரர் தன்னுடைய கிரந்தங்களெல்லாவற்றையும் மூன்றுதடவை இவருக்கு சொல்லி வைத்தார். இதைப்பார்த்து மற்ற சிஷ்யர்கள 'தங்களுக்கு இவ்விதம் கற்றுக்கொடுக்கவில்லையே' என்று அஸூயையடைந்தார்கள். அவர்களுடைய அஸூயையைப்போக்கடிக்க விரும்பி ஆசார்யர் ஒருதினம் கங்கையின் இக்கரையிலிருந்து கொண்டு அவஸரமாக அக்கரையிலிருக்கும் ஸனந்தனரை கூப்பிட்டதும் வேறொன்றையும் கவனியாமல் குருபக்தியால் தண்ணீரென்றும் பாராமல் காலால் நடந்தே கங்கையைக்கடக்க ஆரம்பித்து விட்டார். இவருடைய பக்தியைக்கண்டு வியந்து கங்கையானவள் தாமரைகளால் அவருடைய பாதங்களை தாங்கிக்கொள்ள ஸனந்தனர் இக்கரை வந்து குருவின் ஸமீபமடைந்தார். இக்காரணத்தால் இவருக்கு ஸ்ரீ குருவானவர் "பத்மபாதர்" என்று பெயரிட்டார். மற்ற சிஷ்யர்களும் இவருடைய பக்தியையும் மஹிமையையும் கண்டு அஸூயையை விட்டு இவரிடம் அன்புகொண்டார்கள்.

## ஏழாவது ஸர்க்க ஸங்கிரஹம்.

ஒரு நாள் ஸ்ரீ சங்கரர் கங்கைக்கரையில் சிஷ்யர்களுக்கு பாடம் சொல்லி முடிந்த சமயம் வியாஸாசார்யர் விருத்த பிராமண உருவத்துடன் அங்குவந்து "என்ன பாடம்

நடக்கிறது" என்று கேட்டார். அதற்கு பத்மபாதர் முதலிய சிஷ்யர்கள் "இவர்தான எங்களுடைய ஆசார்யர். ஸூத்ரபாஷ்யம் முதலான பல கிரந்தங்களை இயற்றியவர். எல்லா சாஸ்திரங்களிலும் அஸாதாரணமான ஞானமுள்ளவர்" என்று தெரிவித்தார்கள், இதைக்கேட்டு ஸ்ரீவியாஸர் "ஏதாவதொரு ஸூத்ரத்தின் விரிவான விவரணத்தைக் கேட்க விரும்புகிறேன்" என்று சொல்ல ஸ்ரீ குரு ஸூத்ரங்களின் உட்கருத்துகளை நன்கு அறிந்த பெரியோர்களுக்கு நமஸ்காரம். அவ்விதமான சிறந்த அறிவு எனக்கு இல்லை. ஆனாலும் ஏதாவது ஓரிடத்தில் கேட்டால் என் புத்திக்கெட்டியவாறு தெரிந்தவரை ஏதோ கொஞ்சம் சொல்கிறேன்" என்றார் உடன் வியாஸர் "तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् (ब्रह्मसूत्रं अ. ३. पा. १. सू. १.)

என்ற அதிகரணத்தில் கேட்டார். ஆசார்யர் பதில் சொல்ல ஸ்ரீவியாஸர் மேலும் கேட்க இவ்விதம் எட்டு நாள்கள் இருவருக்கும் வாதம் நடந்தது. முடிவு ஏற்படவில்லை இதைப்பார்த்து பத்மபாதர் கொஞ்சம் ஆலோசித்து திவ்ய திருஷ்டியால் வந்திருப்பது வியாஸர் எனத்தெரிந்து ஸ்ரீ சங்கரருக்கும் ஸ்ரீ நாராயணருக்கும் வாதம் ஏற்பட்டால் எவ்விதம் முடிவு ஏற்படுமென்று கூறினார். இதைக் கேட்டு ஆசார்யரும் தெரிந்து கொண்டு ஸ்வய ரூபத்துடன் தரிசனம் கொடுக்க வேண்டுமென்று பிரார்த்தித்தார். வியாஸரும் ஸ்வயரூபத்துடன் அவருடைய வார்த்தையை சிலாகித்து "சுகர் போல எனக்கு மிகவும் பிரீதியை உண்டு பண்ணுகிற உன்னுடைய பாஷ்யத்தைப் பார்ப்பதற்காகவே வந்தேன்" என்று சொன்னதும் ஸ்ரீசங்

கரர் "என் குற்றங்களை மன்னித்து பாஷ்யத்திலுள்ள தோஷங்களை நீக்கி அநுக்ரஹம் செய்யவேண்டும்" என்று கூறி பாஷ்யத்தை கொடுத்தார். பாஷ்யத்தை வாங்கிப் பார்த்து வியாஸர் மிக ஸந்தோஷமடைந்து ஸூத்ரங்களின் மறைந்திருக்கும் உட்கருத்துக்களை நன்கு வெளியிடுகின்ற இது போன்ற பாஷ்யத்தை உன்னைத்தவிற வேறு யாரால் இயற்றக்கூடும் என்று கூறி ஆலிங்கனம் செய்து விட்டு புறப்படத்தயாரானார்

அப்பொழுது ஸ்ரீ குருவானவர் 'என்னுடைய அவதார கார்யம் பூர்த்தியாய் விட்டது ஆயுளும் முடிந்து விட்டது. தங்கள் ஸந்நிதியில் இச்சரீரத்தைவிட்டு ஸ்வஸ்தானம் செல்கிறேன்' என்று கூறினார். இதற்கு ஸ்ரீ வியாஸர் "இவ்விதம் செய்யக்கூடாது இன்னும் ஜயிக்கப்பட வேண்டிய வாதிகள் பலர் இருக்கின்றனர் அவர்களை ஜயிக்க வேண்டும் அத்வைத ஸித்தாந்தம் நன்கு வேர் ஊன்ற வேணடும். மோக்ஷஸாதனமான விவேகம், வைராக்யம், முமுக்ஷை இவைகள் எங்கும் ப்ரசாரமடைய வேண்டும். இல்லாவிடில் தாயையிழந்த சிறு குழந்தைபோல இவைகள் வளர்ச்சி பெறாது. தங்கள் பாஷ்யமும் ப்ரஸித்தியடையவேண்டும். இதற்காக பரமேச்வரனுடைய ஆக்ஞையின் பேரில் மேலும் பதினாறு வயது கொடுக்கிறேன். அந்த காலத்திற்குள் லோகோபகாரமான கார்யங்களைச் செய்து அத்வைத ஸித்தாந்தத்தை எங்கும் பரவச்செய்து ஸ்வஸ்தானம் செல்லலாம்" என்று கூறிச் சென்றார். ஸ்ரீ குருவும் வியாஸருடைய பிரிவை நினைத்து வருந்தி

ஸமாதானம் செய்து கொண்டு தன் பாஷ்யத்திற்கு குமாரிலபட்டரைக் கொண்டு வார்த்திகம் செய்விப்பதற்காக ப்ரயாக க்ஷேத்ரம் சென்றார்.

அங்கே திரிவேணியில் ஸ்நான சமயம் தன்னை ஈன்றெடுத்து தனக்காகப் பல துக்கங்களை யனுபவித்து தனக்குப்பேருதவி செய்த தன் மாதாவை நினைத்து ஸ்நானம் செய்து ஆஹ்னிகங்களை முடித்துக்கொண்டதும் குமாரிலபட்டர் உமிக்காந்தல் நெருப்பில் ப்ரவேசித்திருக்கும் விருத்தாந்தத்தைக் கேள்விப்பட்டு வருந்தியவராய் வேகமாய் அவர் ஸமீபம் சென்று கண்ணீர் பெருக பக்கத்தில் நிற்கும் ப்ரபாகரர் முதலிய சிஷ்யர்களால் சூழப்பட்டு முகம் மட்டும் வெளியே தெரியும்படியாக உமிக்காந்தல் நெருப்பில் படுத்துக்கொண்டிருக்கும் குமாரிலரைப்பார்த்தார். அவரும் ஸ்ரீ சங்கரருடைய அத்யாச்சர்யகரமான கார்யங்களைக் கேள்விப்பட்டு அவரைப்பார்க்க ஆவல் கொண்டுள்ள போதிலும் இதுவரை தரிசனம் கிடைக்கவில்லை. இப்பொழுது பார்த்த மாத்திரத்தில் ஆனந்தமடைந்தவராய் தன் சிஷ்யர்களைக் கொண்டு அவருக்குப் பூஜை செய்வித்ததும் குருவும் பிக்ஷையை முடித்துக் கொண்டு தன்பாஷ்யத்தை அவரிடம் காண்பித்தார். பாஷ்யத்தைப்பார்த்து குமாரிலர் சந்தோஷத்துடன் "இதில் அத்யாஸ பாஷ்யத்திற்கு மட்டும் எண்ணாயிரம் வார்த்திகங்கள் இயற்றலாம். முன்னாலேயே இதைப்பார்த்திருப்பேனாகில் முழுவதற்கும் வார்த்திகம் இயற்றி மிகுந்த கீர்த்தியையடைந்திருப்பேன். இப்பொழுது அதைச் சொல்லி என்ன பயன்? அந்த பாக்யம் எனக்கு இல்லை.

ஆனாலும் இந்த ஸமயம் கிடைத்தற்கரிய தங்கள் தர்சனம் கிடைத்ததைவிட வேறு என்ன பாக்யம் வேண்டும்? நன்றாயனேன். பால்யத்தில் பௌத்த குருவிடம் பௌத்த மத ரஹஸ்யத்தைக் கற்று பிறகு விவாதத்தில் அவரை நிக்ரஹம் செய்தேன். ஒரு அக்ஷரம் சொல்லிக்கொடுத்தவரும் குருவென்று சாஸ்திரம் கூறுகிறது. மலையின் உச்சியிலிருந்து விழும் சமயம் வேதம் பிரமாணமாக இருக்குமானல் என்று கூறினேன். பலனைக்கொடுப்பது கர்மா தான் ஈச்வரனை கிடையாதென்று ஸித்தாந்தம் செய்தேன். இந்த மூன்று வித பாபங்கள் நிவர்த்தியாவதற்காக இப்பொழுது பிராயச்சித்தம் அனுஷ்டித்துக் கொண்டிருக்கிறேன். முன்னாலேயே தங்கள் தர்சனம் கிடைத்திருக்குமேயானல் இதை ஆரம்பித்திருக்கமாட்டேன். அதுவே எனக்கு பிராயச்சித்தமாக ஆகிவிடும். இதனாலும் நஷ்டமொன்றுமில்லை. இப்பொழுது இரண்டு மடங்கு பிராயச்சித்தமாகிவிட்டது." என்று கூறினர்.

இதைக்கேட்டு குரு "வைதிகமான கர்மமார்க்கத்தை ஸ்தாபிப்பதற்கும் அதன விரோதிகளை சிக்ஷிப்பதற்கும் அவதரித்த ஸுப்ரஹ்மண்யரே தாங்கள். தங்களுக்கு பாபமும் ப்ராயச்சித்தமும் ஏது? ஆகையால் கமண்டலு ஜலத்தால் உங்களை ஸ்வஸ்தமாக்குகிறேன். உங்கள் இஷ்டப்படி வார்த்திகம் செய்யுங்கள்" என்று சொன்னதும் "இறந்துவெகுகாலமானவரையும் பிழைக்கச்செய்யவும் காலவிருத்யையும் மாற்றவும் சக்தியுள்ள தங்களுக்கு என்னைப் பிழைக்க வைப்பது பெரிய கார்யமல்ல. ஆனாலும் லோக விருத்தமாயும் சாஸ்திர விருத்தமாயுமுள்ள கார்யங்களைச்

செய்வதும் பெரியோர்கள் சிக்ஷிக்கும்படியாக ஆரம்பித்த கார்யத்தை நடுவில் நிறுத்துவதும் உசிதமல்ல. ஆனதால் இந்த ப்ராயச்சித்தத்தை முழுவதும் அனுஷ்டிக்க விரும்புகிறேன். ஞானமார்க்கத்தை உலகில் ஸ்தாபிக்க, ஈச்வரனை நிராகரணம் செய்து கர்ம மார்க்கத்தை ஸ்தாபித்த என்னை ஜயிப்பதும் அவசியமானால் என்னுடைய சிஷ்யர்களுக்குள் சிறந்த மண்டன மிச்ரரை ஜயித்தாலே போதுமானது. அவர் என்னைவிட மேலானவர். சீக்கிரம் நீர் அங்குசென்று அவருடைய மனைவியை மத்யஸ்தையாகக் கொண்டு விவாதம் செய்து அவரை ஜயித்து சிஷ்யராக்கிக் கொண்டு அவரைக்கொண்டே பாஷ்யத்திற்கு வார்த்திகங்களை செய்விக்கலாம். எனக்கு இப்பொழுது தாரகமந்திரத்தை உபதேசம் செய்து அனுக்ரஹம் செய்ய வேண்டும்" என்று பிரார்த்தித்த குமாரில பட்டருக்கு ஆத்ம தத்வத்தை உபதேசம் செய்து விட்டு அவருடைய சிஷ்யரான மண்டனரை க்ருதார்த்தனாகச் செய்வதற்காக சிஷ்யர்களுடன் மாஹிஷ்மதிநகரம் சென்றார்

## எட்டாவது ஸர்க்க ஸங்கிரஹம்.

ஸ்ரீ சங்கரர் யோகசக்தியால் ஆகாச மார்க்கமாக அங்குசென்று நதியில் ஸ்நானம் செய்து ஆஹ்நிகங்களை முடித்துக்கொண்டு மத்யான்ன ஸமயம் வழியில் ஜலமெடுக்கச்செல்லும் தாசிகளைப்பார்த்து மண்டனருடைய கிருஹத்தைப்பற்றிக் கேட்டார். "எந்த வீட்டின் வாசலில் கிளிகள் சாஸ்திரார்த்த விசாரம் செய்கின்றனவோ அது மண்டனமிச்ரருடைய கிருஹமென்று சொன்னார்கள்.

இந்த அடையாளத்தைக் கொண்டு அவருடைய கிருஹத்திற்கு சென்ற சமயம் மண்டனர் கதவைச்சாத்தி தாழ்ப்பாளிட்டுக்கொண்டு உள்ளே சிராத்தம் செய்து கொண்டிருந்தார். கதவு திறக்கப்படாததால் ஆகாசவழியாக உள்ளே சென்று வியாஸரையும் ஜைமினியையும் பார்த்து அவர்களால் புகழப்பட்டவராய் ஸமீபத்தில் நின்றார். ஸந்நியாஸ சாஸ்திரத்திற்கு ப்ராமாண்யம் கிடையாது. அர்த்தவாதம் என்று சொல்கிற மஹாகர்மடரான மண்டனர் பிராமணர்களுக்கு பாதப்ரக்ஷாலனம் செய்துகொண்டிருக்கும் சமயம் மஹரிஷிகளால் கொண்டாடத்தகுந்த யதிஸார்வபௌமர் சிகையக்ஞோபவீதமில்லாமல் சிராத்ததினத்தில் தன் கண்ணில் படும்படியாக எதிரில்வந்து நின்றதைப்பார்த்து பொறுக்காதவராய் கதவு சாத்தப்பட்டிருக்கும்பொழுது எவ்வழியாக வந்தாய் என்ற கருத்துடன் "குதோ முண்டி" என்று கேட்டார். இதற்கு ஆசார்யர் கழுத்துவரை முண்டனம் என்று பதில் கூறினார். இவ்விதம் மேன்மேலும் வக்ரோக்தியாக இருவரும் வியவஹாரம் செய்யும்பொழுது வியாஸர் தடுத்து "கர்மகாலத்தில் இவ்வித கெட்ட வார்த்தைகள் பேசுவது உசிதமில்லை வந்தவர் ஸாமான்யரல்ல. ஆத்மஞானிகளுக்குள் சிறந்தவர். மஹாவிஷ்ணுவே வந்திருக்கிறார் என்ற பாவனையுடன் இவரையும் நிமந்த்ரணம் செய்" என்று சொன்னதும் மண்டனர் பிக்ஷை செய்ய வேண்டுமென்று பிரார்த்தித்தார். குருவும் "அன்ன பிக்ஷைக்காக நான் வரவில்லை வாத பிக்ஷைக்காக வந்திருக்கிறேன். எல்லா மதங்களையும் ஜயித்து அத்வைத மதத்தை ஸ்தா

பிப்பது என்னுடைய கார்யம். உம்மை ஜயிப்பதற்காக வந்திருக்கிறேன். தோல்வியை ஒப்புக்கொண்டு என் ஸித்தாந்தத்தை ஒப்புக்கொண்டால் வாதம் வேண்டாம். இல்லாவிட்டால் விவாதம் நடக்கட்டும். தோல்வியடைந்தவர் ஜெயித்தவருடைய ஆச்ரமத்தை ஸ்வீகரிக்க வேண்டும்" என்பதுதான் பந்தயமாக ஒப்புக்கொள்ளப்படவேண்டும்" என்று தன் அபிப்ராயத்தை வெளியிட்டார்.

இதைக் கேட்டு மண்டனர் "ஆதிசேஷனையோ மஹாதேவனையோ, நாராயணனையோ ஜயிப்பதற்கு திறமையுள்ள என் வாயிலிருந்து எப்படி ஜயிக்கப்பட்டேன் என்ற வார்த்தை வரும். விவாதத்தில் மிகவும் பிரியமுள்ள நான் வெகுநாளாகவே இதை எதிர்பார்த்திருந்தேன். இது கிடைத்ததால் மிகவும் ஸந்தோஷமடைகிறேன். நாமிருவரும் கட்டாயம் விவாதம் செய்வோம். ஆனால் வெற்றி தோல்வியை தீர்மானிப்பதற்கு மத்யஸ்தர் ஒருவர் வேண்டுமே. மத்யஸ்தரில்லாத விவாதம் நிர்ணயமேற்படாமல் வீணான சிரமத்தையே கொடுக்கும்" என்று கூறினார். இதைக்கேட்டு ஸ்ரீ சங்கரர் வியாஸரையும் ஜைமினியையும் பார்த்து "எங்களுடைய பாக்யவசத்தால் இங்கு வந்திருக்கும் நீங்களே மத்யஸ்தர்களாக இருக்கவேண்டும்" என்று பிரார்த்திக்க அவர்கள் "உபயபாரதி எல்லாமறிந்தவள் இவளையே ஸாக்ஷியாக வைத்துக்கொண்டு விவாதம் செய்யுங்கள்" என்று முடிவு செய்தார்கள். மண்டனரும் மூவர்களையும் விசேஷமாக பூஜித்தார். கர்மா முடிந்ததும் வியாஸரும் ஜைமினியும் கொஞ்சநேரம் ஸம்பாஷித்துவிட்டு குருவிடம் விடைபெற்றுக்கொண்டு சென்றனர்.

மறுதினம் மண்டனரின் அநுமதியின்பேரில் மத்யஸ்தையாயிருப்பதற்கு ஒப்புக்கொண்ட ஸாத்வியான உபயபாரதியை முன்னிட்டு விவாதமாரம்பமாயிற்று. இருவரும் தங்கள் தங்கள் ஸித்தாந்தத்தை விவரித்தனர். ஒவ்வொருநாளும் ஆஹ்னிகங்களை முடித்துக்கொண்டு விவாதம் ஆரம்பிப்பார்கள். உபயபாரதியும் தன் யோகசக்தியால் செய்யப்பட்ட மாலைகளை இருவர் கழுத்திலும் போட்டு யாருடைய மாலை வாடுகிறதோ அவரே தோல்வியுற்றவர் என்று கூறி வீட்டுக்காரியங்களை கவனித்துக்கொண்டிருப்பாள். மத்யான்னஸமயம் யதீச்வரரை பிக்ஷைக்கும், தன் பர்த்தாவை போஜனத்திற்குமழைப்பாள். இவ்விதம் ஐந்தாறு தினங்கள் சென்றதும் ஒரு தினம் தன் பர்த்தாவின் கழுத்திலுள்ள மாலை வாடியிருப்பதைப்பார்த்து இருவரையும் பிக்ஷைக்கு கூப்பிட்டாள். இவளுடைய சாதுர்யத்தைப்பார்த்து ஸ்ரீ சங்கரர் ஆனந்தமடைந்தார். "துர்வாஸ மஹரிஷியால் எனக்கு ஏற்பட்ட சாபம் தங்களுக்கு ஜயம் ஏற்பட்டதிலிருந்து இன்று முடிந்து விட்டது. ஆனதால் நான் என் ஸ்தானம் செல்கிறேன்" என்று உபயபாரதி கூறி கிளம்பிச்செல்ல ஸ்ரீகுரு அவளையும் ஜயித்து தன் ஸித்தாந்தத்தை உலகம் கொண்டாடும்படி செய்ய வேண்டுமென்று விரும்பியவராய் வனதுர்க்கா மஹாமந்திரத்தால் அவளைத்தடுத்து தாயே, நீ ஸரஸ்வதியென்றும் லோகோபகாரத்திற்காக அவதாரஞ் செய்திருக்கிறாயென்றும் அறிந்து கொண்டேன். பக்தனான என் கோரிக்கையை பூர்த்தி செய்துவிட்டு செல்ல வேண்டுமென்று பிரார்த்தித்தார்.

## ஒன்பதாவது ஸர்க்க ஸங்கிரஹம்.

மண்டனர் குருவின் வார்த்தையால் மனதில் உறுதி கொண்டபோதிலும் "நான் தோல்வியடைந்ததைப்பற்றி எனக்கு வருத்தமில்லை. எல்லாமறிந்த ஜைமினி மஹரிஷியின் வார்த்தையும் பொய்யாக ஆய்விட்டதே என்பதில் தான் வருத்தம்" என்று கூறினார் இதைக்கேட்டு ஸ்ரீகுருவும் "இதைப்பற்றி நீர் வருத்தப்படவேண்டாம். ஜைமினி மஹரிஷிக்கும் இதில்தான் தாத்பர்யம். நன்கு கவனித்தால் தெரியவரும். இதை நீர் அறிந்துகொள்ளவில்லை. பலனைவிரும்பாமல் செய்யும் கர்மாவானது சித்தசுத்தி வைராக்யம் மூலம் ஞானத்திற்கு ஸாதனமாகிறது. வேதம் ப்ரவிருத்தி நிவிருத்திபரம் என்று ஜைமினி சொன்னது கர்ம காண்டத்தைப்பற்றியது. ஞான காண்டத்தைப்பற்றியதல்ல. இவ்விதமே ஜைமினி ஈச்வரனை நிராகரணம் செய்ததற்கும் தார்க்கிகர்களு சொல்வது போல கேவல அனுமானத்தால் ஈச்வரனை ஸாதிக்க முடியாது என்பதில்தான் தாத்பர்யம்" என்றுகூறி ஜைமினி மஹரிஷியை ஸ்மரித்தார். அந்த நிமிஷமே முனிவர் அங்குவந்து உண்மையை அறிந்து லோகக்ஷேமத்திற்காக அவதரித்த பரமேச்வரனுடைய மஹிமையை வர்ணித்து மண்டனரைப்பார்த்து "இவர் சொன்னதுதான் என்னுடைய அபிப்பிராயம். இவர் சொல்வது முழுவதும் நம்பத் தகுந்தது" என்று கூறி ஸமாதானம் செய்து மறைந்து விட்டார்.

மண்டனரும் ஸமாதானமடைந்து ஸந்தேஹம் நீங்கி குருவின் மஹிமையை அறிந்து ஸ்தோத்ரம் செய்து ஸம்ஸாரஸாகரத்திலிருந்து கரையேறுவதற்காக தங்கள் பாதத்தையே சரணமாக அடைந்தேன். என்னை சிஷ்யனாக ஏற்றுக்கொள்ளவேண்டும்' என்று பாதத்தில் விழுந்தார். குருவானவர் அவருக்கு அனுக்ரஹம் செய்ய ஆவலுள்ளவராயிருப்பதை அறிந்த உபயபாரதி "யதிஸார்வபௌமரே! பால்யத்தில் என் வருங்காலத்தைப்பற்றி என் தாயாரால் கேட்கப்பட்ட ஒரு யோகீச்வரர் "ப்ரஹ்மாவின் அவதாரமான இவளுடைய கணவன் பரமேச்வராவதாரமான யதீச்வரரால் விவாதத்தில் தோல்வியடையப்போகிறார்" என்று கூறிச்சென்றார். அவ்விதமே நடந்து விட்டது. ஆனாலும் மனைவியை கணவனுடைய பாதி சரீரமாக வேதம் கூறுவதால் என்னையும் ஜயித்தால்தான் பூர்ண ஜயம் உமக்கு கிடைக்கும். இல்லாவிடில் பாதி ஜயம்தான்" என்று கூறினாள்.

குருவும் அதை அங்கீகரித்து "கார்கியுடன் யாக்ஞவல்க்யர் விவாதம் செய்ததுபோல் உன்னுடன் விவாதம் செய்வதில் தப்பில்லை. மேலும் தன் மதத்தை எதிர்க்கின்றவன் புருஷனாயிருந்தாலும் ஸ்திரீயாயிருந்தாலும் ஜெயிக்கவேண்டியது அவசியம்" என்று கூறினதும் இருவருக்கும் பெரிய பண்டித ஸதஸ்ஸில் விவாதம் ஆரம்பமாயிற்று. ஆஹ்னிககாலம் தவிர எல்லா காலங்களிலும் விவாதம் நடந்தது. இவ்விதம் பதினேழு நாட்கள் சென்றன. எல்லா சாஸ்திரங்களிலும் ப்ரச்னம் செய்து ஒன்றிலும் ஜயிக்க முடியாமலிருப்பதைக் கண்டு உபயபாரதி

பால்யத்திலேயே ஸந்யாஸாச்ரமம் புகுந்ததாலும், ஸந்யாஸி தர்மங்களிலிருந்து நழுவாமலிருக்கிறபடியாலும் காம தந்திரத்தில் அப்யாஸமில்லாதபடியாலும் அதில்தான் இவரை ஜயிக்கவேண்டுமென்று எண்ணி ப்ரச்னம் செய்தாள். ஸ்ரீ சங்கரரும் இதற்கு பதில் கூற ஒருமாதம் அவகாசம் கொடுக்கவேண்டுமென்று கேட்டுக் கொண்டு சிஷ்ய கணங்களுடன் ஆகாச மார்க்கமாக அங்கிருந்து புறப்பட்டுச் சென்றார்.

அப்பொழுது ப்ராணனை இழந்த, ஸ்வர்க்கலோகத்திலிருந்து வந்த தேவன் போன்ற அமருகராஜனுடைய சரீரத்தில் தன் யோக சக்தியால் பிரவேசிக்க விரும்பிய ஆசார்யரை பத்மபாதர் காமபரவசமாய் யதி தர்மத்திற்கு பங்கம் நேருமென்று கூறி தடுத்தார். அதற்கு ஆசார்யர் "அஸங்கமான ஆத்மஸ்வரூபத்தை அறிந்தவனுக்கு ஒரு வித ஸங்கல்பமுமில்லாததால் அவன் ஒரு நாளும் காம பரவசனாக ஆகமாட்டான். வஜ்ரோளி என்னும் யோகத்தை அப்யஸித்தவனுக்கு விரத லோபம் ஏற்படாது. ஸ்ரீ கிருஷ்ணபரமாத்மா கோபிகைகளுடன் க்ரீடை செய்யவில்லையா? ஸ்வப்னத்தில் செய்யும் புண்ய பாபங்கள் இவனுக்கு பலனை கொடுக்கின்றனவா? அது போல் ஆத்மாவைத் தவிற மற்றெல்லாவற்றையும் ஸ்வப்னத்திற்கு துல்யமாக பார்ப்பவனுக்கு புண்ய பாப ஸம்பந்தமும் கிடையாது. ஆனதால் கவலையில்லாமல் நான் வரும்வரை இங்கேயே குஹையிலிருந்து கொண்டு இந்த தேஹத்தை காப்பாற்றிக் கொண்டிருங்கள்" என்று கூறி

யோக சக்தியால் சரீரத்திலிருந்து சிரஸ் வழியாக கிளம்பி அமருக சரீரத்தில் புகுந்து கை கால் முதலியவைகளை அசைத்துக் கொண்டு எழுந்திருந்தார். இதைக் கண்டு சந்தோஷங்கொண்ட ஸ்திரீகளாலும் மந்திரிகளாலும் சாந்திகர்மா செய்விக்கப்பட்டவராய் பட்டத்து யானையின் மேல் ஏறிக்கொண்டு வாத்ய கோஷங்களுடன் நகரத்தில் பிரவேசித்து அரண்மனையை அடைந்து தர்மமாக பிரஜைகளை பரிபாலித்து வந்தார்.

## பத்தாவது ஸர்க்க ஸங்கிரஹம்.

ஆசார்யர் அமருக சரீரத்தில் புகுந்து ராஜ்ய பரிபாலனம் செய்யும் பொழுது ஜனங்கள் ஸ்வதர்மத்தை விடாது அனுஷ்டித்து வந்தார்கள். காலத்தில் மழை பெய்து பூமி முழுவதும் செழிப்பாயிருந்தது. குருவின் புத்தி, தைர்யம், சௌர்யம் கொடை முதலிய அஸாதாரணமான குணவிசேஷங்களைக் கண்டு மந்திரிகள் "இவர் நம்முடைய பழய ராஜா அல்ல. யாரோ ஒரு மஹா புருஷர் தன் யோக சக்தியால் இச் சரீரத்தில் புகுந்திருக்கிறார். மறுபடியும் தன் சொந்த சரீரத்தில் பிரவேசிக்காமல் இந்த சரீரத்திலேயே ஸ்திரமாக இருக்கும்படி செய்துவிட வேண்டும்" என்று ரஹஸ்யமாக ஆலோசித்து "பிராணனில்லாத சரீரம் எங்கிருந்தாலும் தேடிக் கண்டுபிடித்து உடனே கொளுத்திவிடுங்கள்" என்று உத்தரவு செய்து தூதர்களை அனுப்பினார்கள். குருவும் ஆப்தர்களான மந்திரிகளிடம் ராஜ்ய பாரத்தை ஒப்புவித்துவிட்டு காமசாஸ்திர ரஹஸ்யங்களை அறிந்து

கொள்ள அந்தப்புரத்தில் ஸ்திரீகளுடன் விஹாரம் செய்து கொண்டிருந்தார். ஸ்வல்ப காலத்திலேயே முழுவதும் அறிந்து அது விஷயமாக ஒரு கிரந்தத்தையுமியற்றினர்.

இது ஸமயம் குருவின் சரீரத்தை ஜாக்ரதையாக காப்பாற்றிக் கொண்டிருக்கும் சிஷ்யர்கள் ஒரு மாதம் சென்றும் குரு வாராததால் மிகவும் வருந்தியவர்களாய் தங்களில் சிலரை அங்கேயே இருக்கும்படி செய்துவிட்டு பத்மபாதர் முதலிய முக்ய சிஷ்யர்கள் குருவைத்தேடி புறப்பட்டுச் சென்றனர். மலைகளிலும் காடுகளிலும் நகரங்களிலும் தேடிக் கொண்டு க்ரமமாக அமருக தேசத்தை யடைந்து தேசத்தின் செழிப்பைப் பார்த்து மஹாராஜன் இறந்து பிறகு பிழைத்த வரலாறையும் கேள்விப்பட்டு அங்கேயே குரு இருப்பதாக தீர்மானித்து காயக வேஷத்துடன் ராஜஸபை சென்று குருவுக்கு மட்டும் விளங்கும்படியாக தத்வத்தை எடுத்துச் சொன்னார்கள். அதைக் கேட்டு அந்த நிமிஷமே ராஜ சரீரத்தை விட்டுக் கிளம்பி தன் சரீரத்தில் புகுந்து கொண்டார். அதே சமயம் மந்திரிகளால் உத்தரவிட்டு அனுப்பப்பட்ட தூதர்கள் தன் சரீரத்தில் நெருப்பிட்டிருப்பதை அறிந்து ஸ்ரீ லெக்ஷ்மீந்ருஸிம்ஹரை ஸ்தோத்ரம் செய்தார். அவருடைய அநுக்ரஹத்தால் தாபம் தணிந்தவராய் சிஷ்யர்களுடன் மறுபடியும் மண்டன இருப்பும் சென்றார். மண்டனரும் மிகச் சந்தோஷங்கொண்டவராய் தன்னுடைய தனமெல்லாவற்றையும் தன்னையும் குருவிடம் அர்ப்பணம் செய்தார். சாரதையும் "எல்லாமறிந்தவரும் எல்லா வித்யைகளுக்கும் ஈசனுன தங்களுக்

ருத்தெரியாதது என்ன இருக்கிறது. சிஷ்டர்களின் ஸம்ப்ரதாயத்தை காப்பாற்றுவதற்கும் பிறருக்கு வழி காட்டுவதற்காகவும் தான் ஒரு மாஸம் அவகாசம் கேட்டதும் பிறர் சரீரத்தில் புகுந்ததும். என் கணவனை முழுவதும் ஜயித்தாய்விட்டது. என் ஸ்தானம் செல்கிறேன். அநுமதி கொடுக்கவேண்டும்" என்று கூறினாள். குருவும் "என்னால் கல்பிக்கப்பட்ட ஸ்தானங்களில் எப்பொழுதும் ஸாந்நித்யத்தை யடைந்து கொண்டு பக்தர்கள் கோரிய பலனைக் கொடுத்து காப்பாற்றவேண்டும்" என்று சொன்னதும் அதை அங்கீகரித்து தன் ஸ்தானம் சென்றாள். மண்டனரும் ஸந்யாஸாச்ரம ஸ்வீகாரம் செய்து கொள்வதற்கு பூர்வாங்கமாக செய்யவேண்டிய வைதிக கர்மாக்களையெல்லாம் செய்து ஸர்வஸ்வத்தையும் தியாகம் செய்து குருவை சரணமாக அடைந்தார். குருவும் மஹாவாக்யோபதேசம் செய்தார். பிறகு சிஷ்யர்களுடன் ஆசார்யர் மஹாராஷ்ட்ரம் முதலிய தேசங்களில் சஞ்சரித்து தன் கிரந்தங்களை பிரசாரம் செய்துகொண்டு க்ரமமாக ஸ்ரீசைலம் சென்றார்.

## ॥ चतुर्थः श्लोकः ॥

भाष्यभूषितमागताब्जपदादिनेयमबोधयत्
व्यासतोषणवादधोरणिरीशदत्तवरेश्वराद् ।
भट्टपादनिदेशमण्डनमिश्रवादविशारदो
भारतीमपि संजयन्नमरूर्ज्जयन् नृहरिं स्तुवन् ॥ ४ ॥

भाष्येति । पूर्वश्लोकान्तिमपादः अनुवर्तते । सूत्रवद्-

शिरस्सुगीतसनत्सुजातसहस्रकं भाष्यभूषितं स्वीयभाष्येण भेद-वादनिराकरणपरेण अलंकृतं, अब्जपदः आदिः यस्य स चासौ नेयश्च विनेयश्च । आगतश्चासौ अब्जपदादिनेयश्च तम्; जात्येक-वचनम् । यः गुरुरबोधयत् अध्यापयामासेत्यर्थः । एतच्च भाष्यं देवलोकेष्वपि प्रथितं बभूव । तथाहि— भाष्येण भूषिता या सा लक्ष्मीः लक्ष्म्यादिनानाशक्तिरूपेण वर्तमाना पराशक्तिः । आगतश्चासौ अब्जपदश्च अब्जं पदं स्थानं यस्य सः कमलासन इत्यर्थः । तदादीन नेयान् विनेयान् शिष्यान् इत्यर्थः । अबोध-यत्, भाष्यमिति शेषः । दक्षिणामूर्तिरूपेणेत्यर्थः । 'दक्षिणामूर्ति-रूपिणी' इति ललितासहस्रनामोक्तेः । एवं च तदवसरेण वटतरु-मूले ब्रह्मादिशिष्यान् परमात्मतत्त्वं बोधयन्ती पराशक्तिरपि भाष्येणालंकृतेत्युक्त्या तल्लोकपर्यन्तं भाष्यं प्रसिद्धमभूदिति ध्वन्यते । व्यासस्य तोषणी वादानां धोरणी यस्य सः । व्यासस्य तोषणवादाः श्लाघावचनानि तेषां धोरणी यस्य सः ॥

ईशेति । ईशेन विश्वनाथस्वामिना दत्तः वरः भाष्य-करणाद्वैतमतप्रचारणशिष्यस्थापनादिरूपः यस्मै स चासौ ईड्य-राट् च पण्डितप्रवरैः स्तुत्यानां वरः पण्डितानां श्लाघनीयतम इत्यर्थः । भट्टपादेति । भट्टपादस्य निदेशः मण्डनजयेन सर्वेषां जितत्वं, तेनैव भाष्यटीका कारयितव्या इत्यादिरूपं विज्ञापनं मण्डनं यस्य सः । मिश्रवादे विशारदश्च समर्थश्च । भारतीं उभयभारतीमपि संजयन् संप्रदायेन जयन् सन् परकायस्वीक-

रणार्थं अमरुं अमरुकशरीरं स्वप्रवेशेन ऊर्जयति प्राणयति बलयतीति अमरुकं । 'ऊर्ज बलप्राणनयोः' इति धातोः क्विबन्तस्य रूपम् । अमरुकराजशरीरे वर्तमानवेलायां मण्डने तत्तदुचितालंकरणे; मिश्रे मिश्रणे मेलने इत्यर्थः । गान-वेलायां तानतालादिविविचित्रजातिमिश्रणे; वादे विनोदवेलायां चाटुभाषणे च विशारदः समर्थः । अक्षक्रीडावेलायां विविधं शारान् अक्षान् द्यूतानि प्रयोजयतीति च विशारदः । जयन् राज्यपरिपालनविषये च पूर्वाभिज्ञया सर्वोत्कर्षेण वर्तमानश्च । नृहरिं नरं मनुष्यशरीरं स्वकीयमपि चिह्नशरीरमिति यावत् । तं हरति अपहरति दहतीति नृहरिः दूतविसृष्टाग्निः तं शमयितु-मिति शेषः । नृहरिं लक्ष्मीनृसिंहं स्तुवन् स्तुतवान् इत्यर्थः । स्तोत्रेण प्रसन्नलक्ष्मीनृसिंहानुग्रहेण आनन्दहृतः सन् मण्डनगृहं प्रापेति पूरणीयम् ॥

ஸ்ரீ சங்கரர், ப்ரஹ்மஸூத்ரம், உபநிஷத்துக்கள், பகவத்கீதை, ஸநத்ஸுஜாதீயம், விஷ்ணுஸஹஸ்ரநாம ஸ்தோத்ரம் இவைகளுக்கு பாஷ்யமியற்றி பத்மபாதர் முதலிய சிஷ்யர்களுக்கு சொல்லிவைத்தார். பூலோகத்தில் மட்டுமல்ல, தேவலோகத்திலும் பாஷ்யம் ப்ரசாரத்தை யடைந்து தேவர்களும் இதைக் கற்கவும் கற்றுக் கொடுக்கவும் ஆரம்பித்தனர். குரு விருத்த பிராஹ்மண வேஷத்துடன் வந்த ஸ்ரீ வியாஸருடன் விவாதம் செய்து அவரை சந்தோஷப்படுத்தி அவரால் பலவாறு ஸிலாகிக்கப்

பட்டர். சண்டாள வேஷத்துடன் வந்த ஸ்ரீ விச்வ நாதரிடமிருந்து பாஷ்ய மியற்றவும் அத்வைத ஸித்தாந் தத்தை பரவச் செய்யவும் ஆங்காங்கு சிஷ்யர்களை ஸ்தாபிக்கவும் வரங்களைப் பெற்று சிறந்த பண்டிதர் களாலும் புகழப்பட்டு விவாதத்தில் எல்லோரையும் ஜெயிப்பதற்காக பட்டபாதரை அடைந்தார். மண்ட னரை ஜயித்து அவரைக் கொண்டே பாஷ்யத்திற்கு வார்த்திகம் இயற்றும்படியும் அவர் ஒருவரை ஜயித் தாலேயே போதுமென்றும் பட்டபாதரால் தெரிவித்துக் கொள்ளப் பட்டவராய் மண்டன மிச்ரரை ஜயித்து அவர் பத்னியான உபயபாரதியை ஜயிப்பதற்காக யோகசக்தி யால், பிராணனை இழந்த அமருக ராஜனின் சரீரத்தில் புகுந்து முன்னைவிட சிறப்பாக தர்மம் ஓங்கி பூமிசெழிக்கும் படி பிரஜைகளை பரிபாலனம் செய்துகொண்டு, அந்தப் புரத்தில் ஸ்திரீ ஜனங்களுடன் விஹாரம் செய்துகொண்டு காமசாஸ்திர ரஹஸ்யத்தை முழுவதும் நன்கு அறிந்து, சமயத்தில் மாறுவேஷங்கொண்ட சிஷ்யர்களால் விக்ஞா பனம் செய்து கொள்ளப்பட்டவராய் மறுபடியும் அந்த சரீரத்தை விட்டு தன் சரீரத்தில் புகுந்து, மந்திரிகளின் உத்திரவின் பேரில் தூதர்கள் நெருப்பு வைத்திருப்பதை அறிந்து ஸ்ரீ லெக்ஷ்மீந்ருஸிஹ்மரை ஸ்தோத்ரம் செய்து அவருடைய அனுக்ரஹத்தால் தாபம் தணிந்து ஸ்வஸ்த ராக மறுபடியும் மண்டன கிருஹம் சென்றார்.

## ॥ पञ्चमः श्लोकः ॥

( एकादशसर्गकथा )

श्रीशैलक्षेत्रवाससमये कदाचित् कश्चित् कापालिकः चिरकालं दुष्करतपसा ईशं साक्षात्कृत्य सशरीरकैलासगमनं नन्दीश्वरेण विहारं च प्रार्थयामास। 'तव मनोरथः सिध्येत् यदि मदर्थं चक्रवर्तिशिरो वा सर्वज्ञशिरो वा असौ हूयेत' इत्युक्त्वाऽन्तर्हिते परमेश्वरे तदर्थं यतमानः कापालिकः चक्रवर्तिशिरः न लभ्यतेऽपि लब्धं इति निश्चित्य श्रीपरमाचार्यसमीपं प्राप्य प्रार्थनाचातुर्यधुरीणत्वेन यथामनोरथं प्रार्थितवान्। तदा परमकारुणिको गुरुरङ्गीकृत्य तदीयां प्रार्थनां "रहस्येव तत्साधयितुमुचितम्। शिष्यैर्विदितं चेत् कार्यस्य विघातः प्रसज्येत। तस्मात् अन्तरागच्छ" इत्युक्त्वा प्रेषयामास। तथैव कापालिकः आन्तरागतः। तदा पद्मपादादयः सर्वेऽपि शिष्याः स्नानाद्यर्थं बहिर्गता आसन्। कापालिकं दृष्ट्वा गुरुश्च एकान्ते निर्विकल्पकसमाधौ स्थितवान्। विस्मृतप्रपञ्चजातं समाधिलीनं श्रीगुरुं हन्तुं सुरापूर्णकपालहस्तः करालकृपाणपाणिः कापालिकः यावदन्तिकमाजगाम तावत् पद्मपादः स्वयमेव तं वृत्तान्तं मनसि ज्ञात्वा क्रुद्धः सन् सकलार्तिनाशनं प्रह्लादवत्सलं श्रीलक्ष्मीनृसिंहं स्मृत्वा तन्मन्त्रसिद्धत्वात् तत्क्षण एव नृसिंहो भूत्वा प्रचण्डाट्टहासः सहसाऽऽगत्य कापालिकं विदार्य ब्रह्माण्डं भिन्दन्निवोच्चैर्जगर्ज। तेन च समाधेर्व्युत्थितो गुरुवरः पुरतो गर्जन्तं

नृसिंहं तेन व्यापादितं कापालिकं च दृष्ट्वा वृत्तान्तं सर्वमपि शिष्यमुखादवगत्य श्रीनृसिंहं तुष्टाव । तेन च सः सद्यः शान्तः प्रसन्नो बभूव ॥

ततः स्निग्धैः पृष्टः पद्मपादः स्वस्य नृसिंहप्रसाद-लाभवृत्तान्तमुक्तवान — "पूर्वं कदाचिन् अहोबलनामकपर्वते पुण्यारण्ये भक्त्यैकवश्यं भगवन्तं श्रीलक्ष्मीनृसिंहं ध्यायन्नेव बहूनि दिनान्यतिवाहयन्नासम् । तदा केनचिन् किरातयूना 'किमर्थमेकान्ते एको वससि' इति बहुवारं पृष्टः अहं 'वनेऽस्मिन् मृगः कश्चिन् आकण्ठं दिव्यमर्त्याकृतिः तत्परं सिंहाकृतिश्च वसति । स तु नाक्षिगोचरो भवति' इत्यवादिषम् । तदानीमेव वनचरोऽयं प्रविश्य वनं लताभिस्तं दृढं बद्ध्वा आकृष्य मम पुरतः स्थापितवान् । तं दृष्ट्वा 'भगवन्, महर्षिभिः मनसा-ऽप्यगम्यो भवान् कथं वनेचरस्य वशंवदस्तिष्ठति' इति प्रार्थित-स्सन् 'यथाऽनेनैकाग्रतया ध्यातः न तथा ब्रह्मादिभिरपि । किमु वक्तव्यं नान्यैरिति । अतो नायमुपालम्भार्हः' इति वदन् प्रसादं विधाय तिरोऽधात् ।" इति ॥

॥ द्वादशसर्गकथा ॥

कदाचित् श्रीगुरुः तीर्थाटनार्थं प्रवृत्तस्सन् गोकर्णक्षेत्रं प्राप्य तत्र परमेश्वरं अपूर्वपद्धतिना स्तोत्रविशेषेणार्हयित्वा ततः प्रस्थाय मध्येमार्गं मृतं शिशुं अङ्के निधाय प्रलपन्तौ तदेकपुत्रौ

पितरौ दृष्ट्वा दयया शिशुं समुज्जीवयन् तदीयानानन्दयित्वा मूकाम्बिकालयं प्राप । तत्र विविधरहस्यार्थकपद्यविशेषैः श्रीमूकाम्बिकां विधिवदुपास्य सर्वैराराध्यमानः काञ्चित्कालमुवास । अथ ततः प्रस्थाय आहिताग्निसहस्रद्वयमण्डितं श्रीबलिनामकमग्रहारं प्राप्य तत्र प्रभाकरनामकद्विजश्रेष्ठेन आबाल्याज्जडाकृतिं स्वपुत्रं आनीय स्वपादयोर्नमितं पादौ विहायानुत्थितवन्तं स्वहस्तेन उत्थाप्य 'कस्त्वं, किमेवं जडवत्प्रवृत्तः' इति पप्रच्छ । तच्छ्रुत्वा सः 'नाहं जडः, किन्तु जडः प्रवर्तते मत्सान्निध्यानेन' इत्यादिद्वादशपद्यैः हस्तामलकवत् आत्मतत्त्वं बोधयद्भिः आत्मानं प्रकाशयामास । तस्य 'हस्तामलकः' इति नामधेयं विधाय 'नायं गृहवासार्हः, अत्रैव तिष्ठतु' इत्युक्त्वा पितरौ संप्रेष्य तमपि शिष्यत्वेन आदाय शृङ्गगिरिं प्रति प्रतस्थे । शृङ्गगिरिं प्राप्य तत्रैव काञ्चित्कालं वसन् तत्रत्यपण्डितश्रेष्ठान् स्वकीयं ग्रन्थजातमध्यापयामास । सर्वशिल्पविचित्रं श्रीशारदाम्बाया आलयं निर्माप्य तत्र प्रत्यहं विस्तरशः पूजादिकं प्रवर्तयामास ॥

## பதமூன்றாவது ஸர்க்க ஸங்க்ரஹம்.

ஸ்ரீ சைல க்ஷேத்ரத்தில் ஆசார்யான் சிஷ்யர்களுடன் வாஸம் செய்யும் சமயம் காபாலிக மதத்தைச்சேர்ந்த ஒருவன் ஸ்ரீசங்கரபகவத்பாதருடைய கீர்த்தி எல்லா திசைகளிலும் பரவிவருவதைக் கண்டு அவர் இயற்றிய கிரந்தங்களையும் பார்த்து மனது பொறுக்காமல் தன் மதம் அழிந்து

விடுமோ என்று பயந்து எவ்வித உபாயத்தாலாவது அவரைக் கொன்றுவிட வேண்டுமென்று தீர்மானித்து மாறு வேஷத்துடன் அவர் சமீபம் சென்று வினயத்துடன் அவரைப் புகழ்ந்து பிரார்த்தித்தான் "நான் வெகுகாலம் கடும் தவம் புரிந்து கபாலியான ஈசனை நேரில் கண்டு இந்த சரீரத்துடனேயே கைலாசம் சென்று ஈசனுடன் விஹாரம் செய்யவேண்டுமென்று வேண்டிக் கொண்டேன். சக்ரவர்த்தியின் சிரஸ்ஸையோ அல்லது ஸர்வக்ஞனுடைய சிரஸ்ஸையோ என்னை உத்தேசித்து அக்னியில் ஹோமம் செய்வாயேயானால் உன் அபீஷ்டம் நிறைவேறும் என்று அநுக்ரஹம் செய்துவிட்டு மறைந்து விட்டார். சக்ரவர்த்தியின் சிரஸ்ஸைப் பற்றி மனதாலும் எண்ணமுடியாது. தாங்களோ ஸர்வக்ஞர். லோகத்திற்கு உபகாரம் செய்வதையே விரதமாகக் கொண்டவர். தாங்கள் தங்கள் சரீரத்தை எனக்குக் கொடுத்து என் மனோரதம் நிறைவேறும்படி அநுக்ரஹம் செய்ய வேண்டும்" இதைக்கேட்டு கருணாநிதியான குருவும் அதை அங்கீகரித்து "இது விஷயம் சிஷ்யர்களுக்குத் தெரிந்தால் இடைஞ்சல் ஏற்பட்டு காரியம் நிறைவேறாமல் போய்விடும். அதனால் நாளைக் காலையில் நான் தனிமையி லிருக்கும்பொழுது வந்து காரியத்தை நிறைவேற்றிக் கொள்ளும்" என்று கூறினார். அவ்விதமே மறுநாள் காலையில் சிஷ்யர்களெல்லாரும் ஸ்நானத்திற்காக வெளியில் போயிருக்கும்பொழுது காபாலிகன் வந்தான். குருவும் தனிமையில் உட்கார்ந்துகொண்டு சரீரத்தை மறந்து நிர்விகல்பக ஸமாதியிலிருந்தார். காபாலிகன் ஸ்ஸ்ரீ

நிரம்பிய கபாலத்தைக் கையிலேந்தியவனும் மற்றொரு கையில் கத்தியை எடுத்துக் கொண்டு சிரஸ்ஸைக் கத்தியால் கொய்வதற்காக ஆசார்யரின் ஸமீபத்தில் வருவதற்குள பத்மபாதர் இந்த விபரத்தை தைவவசமாகத் தானாகவே அறிந்து கோபங்கொண்டு எல்லாத் துன்பங்களையும் போக்கடிக்கும் ப்ரஹ்லாத வத்ஸலரான ஸ்ரீ லெக்ஷ்மீந்ருஸிம்ஹரை ஸ்மரித்து அவருடைய மந்திரத்தை ஆவிருத்தி செய்து ஸித்தி பெற்றிருக்கிறபடியால் அந்த நிமிஷமே நரஸிம்ஹருடைய ஆவேசத்தை அடைந்து அட்டஹாஸம் செய்துகொண்டு காபாலிகன் ஸமீபம வந்து ஹிரண்யகசிபுவைப்போல காபாலிகன் சரீரத்தைக் கிழித்து பிரம்மாண்டம் பிளக்கும்படியாக கர்ஜித்தார். அதனால் ஸமாதி கலைந்து எழுந்திருந்த ஆசார்யர் முன்னால் கர்ஜித்துக் கொண்டிருக்கிற நரஸிம்ஹமரையும் அவரால் கொல்லப்பட்ட காபாலிகனையும் பார்த்து சிஷ்யர் மூலம் விருத்தாந்தமறிந்து நரஸிம்மரை ஸ்தோத்ரம் செய்து சாந்தப் படுத்தினர்.

பிறகு பத்மபாதர் தனக்கு நரஸிம்ஹரின் அனுக்ரஹம் கிடைத்த வரலாறைக் கூறினர். ''முன் ஒரு சமயம் அஹோபலம் என்ற மலையின் ஸமீபமுள்ள காட்டில் பகவான் ஸ்ரீ லெக்ஷ்மீநரஸிம்ஹமரை த்யானம் செய்து கொண்டு வெகுநாள்கள் வஸித்துவந்தேன். ஒருநாள் வேடச்சிறுவன் ஒருவன் என்னிடம் வந்து 'எதற்காக தனிமையில் தாங்கள் வஸித்து வருகிறீர்கள்' என்று கேட்டான். பதில் சொல்லவில்லை. இவ்விதம் பலதடவை

கேட்டபிறகு 'இக் காட்டில் கழுத்துவரை மனித உருவத்துடனும் அதற்குமேல் ஸிம்ஹ உருவத்துடனும் ஒரு மிருகம் வஸிக்கிறது. அதை நேரில் பார்ப்பதற்காகவே தவம் செய்கிறேன்' என்று சொன்னேன். அப்பொழுதே அவ்வேடன் காட்டிற்குள் புகுந்து கண்டு பிடித்து கொடிகளால் கழுத்தில் கட்டி இழுத்துக் கொண்டுவந்து முன்னால் நிறுத்தினான். அவரைப்பார்த்து 'ஸ்வாமி, மஹரிஷிகளுடைய மனதிற்கும் எட்டாத தாங்கள் எப்படி ஒன்றுமறியாத இவ்வேடனுக்கு கட்டுப் பட்டிருக்கிறீர்' என்று பிரார்த்திக்கப்பட்டவராய் ஏகாக்ர மனதுடன் இவன் த்யானம் செய்ததுபோல் வேறு ஒருவரும் த்யானம் செய்யவில்லை. இவனைக் குறைவாக நினைக்கவேண்டாம் என்று கூறி எனக்கு அனுக்ரஹம் செய்துவிட்டு மறைந்துவிட்டார்" என்று கூறினர்.

## பன்னிரண்டாவது ஸர்க்க ஸங்கிரஹம்.

ஒரு ஸமயம் ஸ்ரீ குருவானவர் தீர்த்தாடனத்திற்காக சிஷ்யர்களுடன் கிளம்பி கோகர்ண க்ஷேத்ரம் சென்று அங்கு ஈச்வரனை ஸ்தோத்ரம் செய்து பூஜித்து அங்கிருந்து புறப்பட்டு நடுவழியில் ஓர் கிராமத்தில் இறந்த சிறு குழந்தையை மடியில் வைத்துக்கொண்டு புலம்பிக் கொண்டிருக்கும் தாய் தந்தையரைப் பார்த்துக் கருணை கொண்டவராய் குழந்தையைப் பிழைக்கும்படி செய்து அவர்களை சந்தோஷப்படுத்தினர். பிறகு அங்கிருந்து கிளம்பி மூகாம்பிகாலயம் சென்று அம்பாளைப் பூஜித்து ஸ்தோத்ரம் செய்து கொஞ்சகாலம் அங்கே வஸித்து

வந்தார். பிறகு அங்கிருந்து புறப்பட்டு ஆஹிதாக்னிகள் பலர் வாஸம் செய்யும் ஸ்ரீபலி என்னும் கிராமத்தையடைந்தார். அங்கே ப்ரபாகரர் என்னும் பிராமணர் ஆசார்யாருடைய மஹிமையைக் கேள்விப்பட்டு பிறந்தது முதல் ஜடமாயிருந்த தன் புத்திரனை ஆசார்யாளின் ஸமீபம் அழைத்துக் கொண்டுவந்து வணங்கும்படி செய்து அநுக்ரஹம் செய்யவேண்டுமென்று பிரார்த்தித்தார். தன் பாதத்தில் விழுந்த பையன் எழுந்திருக்காமலிருப்பதைக் கண்டு ஆசார்யர் தன் கையால் அவனை எழுப்பி "நீ யார்? ஏன் இவ்விதம் ஜடம் போலிருக்கிறாய்" என்று கேட்டார். இதைக்கேட்டு அவன் நான் ஜடனில்லை. சேதனனான என்னுடைய ஸாந்நித்யத்தால் தான ஜடமெல்லாம் வேலை செய்கிறது என்று ஆரம்பித்து உள்ளங்கை நெல்லிக் கனிபோல ஆத்மதத்வத்தை விளக்குகின்ற பன்னிரண்டு சுலோகங்களால் தன்னைத் தெரிவித்தான். இதைக்கேட்டு "இவன் உங்களுடன் வீட்டில் வஸிக்கத்தகுந்தவனல்ல. இவன் என்னுடனேயே இருக்கட்டும்" என்று சொல்லி தந்தையை அனுப்பிவிட்டு இவனுக்கு 'ஹஸ்தாமலகர்' என்று பெயரிட்டு சிஷ்யனாக ஏற்றுக்கொண்டு அங்கிருந்து கிளம்பி சிருங்கேரிக்குச் சென்று அங்கே எல்லாருக்கும் தன் கிரந்தங்களையெல்லாம் கற்றுக் கொடுத்துக்கொண்டு கொஞ்சகாலம் வாஸம் செய்துவந்தார். அங்கே ஆச்சர்யப்படும்படியான பல சில்பம் நிறைந்த கோவில் கட்டி அங்கே சாரதாம்பாளை ப்ரதிஷ்டை செய்வித்து விஸ்தாரமாக பூஜைகள் நடக்கும்படி ஏற்பாடு செய்தார்.

॥ पञ्चमः श्लोकः ॥

शिष्यमण्डनखण्डिताखिलवादिवादविजृम्भणो
मूकमातृमुखालयाटनहस्तधात्रिनिषेवितः ।
ऋश्यशृङ्गपुरं वसन्नुरु शारदालयमातनोत्
पद्मपादहृतार्थितोत्तमगात्रभैरवपूजनः ॥ ५ ॥

॥ व्याख्या ॥

शिष्येति । किञ्च यः परमाचार्यः उभयभारत्या ब्रह्मलोकगमनानन्तरं शिष्यभूतः मण्डनमिश्रःपद्मपादाचार्यस्याप्युपलक्षणम् । ताभ्यां तन्मुखेन खण्डितं अखिलाश्च ते वादिनश्च तेषां वादविजृम्भणं वादविस्तारः येन सः । एतत् श्रीशैलप्रान्तसञ्चारकाले प्रवृत्तवादखण्डनपरम् । पञ्चदशाध्यायोक्तदिग्विजयसमये प्रवृत्तवादिखण्डनपरत्वे एवं योजनीयम् — मण्डयतीति मण्डनः कर्तरि ल्युट् । शिष्याणां मण्डनः श्रीभगवत्पादाचार्यः शिष्यान् अक्षोभ्यविवेकवैराग्यातुलशास्त्रपाण्डित्यादिना नितरामलङ्करोति । अत एव शिष्या अपि अलंकृता इव जाज्वल्यन्ते खलु । अथवा, मण्डनपदं मध्यममणिरूपमण्डनविशेषपरम् । शिष्यमुक्ताहारमध्यमणिस्थानीय इत्यर्थः । स चासौ अखिलवादिनां श्रीकण्ठाचार्यहरदत्ताचार्यप्रभृतीनां तदध्यायोक्तप्रचण्डवादिनां वादविजृम्भणं खण्डितं येन सः । तीर्थाटनसमये हस्तामलकप्राप्तिमाह — मूकेति । मूकमाता मूकाम्बा मुखं आदिः यासां तासां देवतानां आलयेषु अटनं यस्य स चासौ । तन्मध्ये महाबलिपुरे वर्त्तमान-

वेलायां हस्तधात्रिणा हस्तामलकेन निषेवितः निश्चयेन सेवितः । अयं गृहानर्हः इति निश्चयेन अत्रैव भवतु इति स्वेनैव सेवितः सेवां प्रापितः इत्यर्थः । ऋश्यशृङ्गेति । क्रमेण शृङ्गगिरिं प्राप्य तत्र वसन् मन् शारदालयं उरु विस्तारं आननोत् निर्मितवान् इत्यर्थः । पद्मपादेति । उत्तमस्य सत्तमस्य गुरूत्तमस्य गात्रं शिरः प्राधान्यात् लक्ष्यते । अर्थितं येन स चासौ भैरवपूजनश्च भैरवोपासक इत्यर्थः । पद्मपादेन हतः तादृशः यस्य सः ॥ ५ ॥

ஸ்ரீ பரமாசார்யர், உபயபாரதி ப்ரஹ்மலோகம் சென்ற பிறகு ஸ்ரீ சைல ப்ராந்தத்தில் ஸஞ்சாரம் செய்துகொண்டு அநேகம் வாதிகளுடைய வாதங்களை மண்டன மிச்ரர் பத்மபாதர் இவர்களால் கண்டிக்கும்படி செய்தார். விவேகம் வைராக்யம் பாண்டித்யம் இவைகளால் சிஷ்யர்களை அலங்கரிப்பவரும், சிஷ்யர்களாகிற முத்து மாலைக்கு நடுமணிபோன்றவருமான ஆசார்யர் தாமும் ஸ்ரீ கண்டாசார்யர், ஹரதத்தாசார்யர் முதலியவர்களின் வாதங்களை கண்டித்து அவர்களை ஜயித்தார். ஏகாம்பர க்ஷேத்திரம் முதலிய க்ஷேத்ரங்களில் யாத்திரைசெய்யும் பொழுது “இந்தப் பையன் உங்களுடன் வஸிக்கத் தகுந்தவனல்ல. என்னுடனேயே இருக்கட்டும்” என்று கூறி ஹஸ்தாமலகரை தன் சிஷ்யராக ஏற்றுக்கொண்டு அவரால் ஸேவிக்கப்பட்டவராய் க்ரமமாக சிருங்ககிரி க்ஷேத்ரம் சென்று அங்கே வாஸம் செய்துகொண்டு ஸ்ரீ சாரதாம்பாளுக்கு பெரிய ஆலயம் ஒன்றைக் கட்டிவைத்து விஸ்தாரமாக பூஜைகள் நடக்கும்படி ஏற்பாடு செய்தார்.

ஆசார்யருடைய சிரஸ்ஸை அவரிடமே ப்ரார்த்தித்து அவரைக் கொல்வதற்கு முயற்சித்த பைரவோபாஸகனை சிஷ்யரான பத்மபாதர் நரஸிம்ஹாவேசம் கொண்டு கொன்றார்.

॥ षष्ठसप्तमश्लोकौ ॥

॥ द्वादशसर्गोपशिष्टकथा ॥

तत्र च श्रीगुरावत्यन्तभक्तिमान् सदा शुश्रूषातत्परः निरतिशयविनयादिसद्गुणसंपन्नः यथायथं पादसंमर्दनशौचदन्तधावनादिसामग्रीनयनशाटीक्षालनादिकार्यं तात्पर्येण कुर्वन् परमानुग्रहार्हः गिरिनामधेयः कश्चित् शिष्यप्रवरः आसीत् । एकस्मिन् दिने पाठारम्भवेलायां तं विहाय सर्वेऽपि समुपागताः । स तु तदा नदीतीरे गुरोर्वस्त्रं शोधयन् आसीत् । तस्यापि आगमनं प्रतीक्षमाण आचार्यः पाठं न प्रारेभे, तूष्णीं स्थितवान् । पद्मपादस्तु पाठारंभे विलम्बमसहमानः सावहेळनं तस्य मूढतां प्रकाशयामास । तत् ज्ञात्वा निरवधिकरुणापरवशहृदयो गुरुः गिरेः सर्वविद्यालाभं मनस्संकल्पेनैव अन्वगृह्णात् । तत्क्षणमेव समधिगतानिखिलविद्याकलापो गिरिः गुरुमाहात्म्यप्रख्यापकान् श्रुतिशिरस्सारप्रदर्शकान् स्वेनैव तोटकवृत्तनिबद्धान् श्लोकान् कथयन्नेव गुरोरन्तिकमाजगाम । दृष्ट्वा चैतत् पद्मपादादयः सर्वे गर्वं विहाय शान्तहृदयाः गुरोर्माहात्म्यं तुष्टुवुः । ततः प्रभृति गिरिश्च तोटकवृत्तश्लोकरचनात् तोटकनाम्ना प्रथितो बभूव ॥

॥ त्रयोदशसर्गकथा ॥

कदाचित् श्रीसुरेश्वराचार्यैः श्रीगुरोः समीपमागत्य, 'भो देशिकेन्द्र, भवदीयं निदेशं परिपूरयितुमभिलषामि । यतः तथाविधं जीवनमेव सफलं भवति । अतो मामनुशाधि' इति प्रार्थयामास । देशिकेन्द्रोऽपि, कुमारिलेनापि स्वाधिकतया निश्चितः सर्वतन्त्रस्वतन्त्रः सर्ववित् अयमेव मदीयभाष्यवार्तिककरणार्हः इति मनसि निश्चित्य 'मदीयस्य सूत्रभाष्यस्य वार्तिकं रचयतु भवान् । एतदेव ममाभीष्टतमं' इति अनुशशास । 'अतिगभीरार्थस्य भवदीयभाष्यस्य वार्तिकं प्रणेतुं नास्ति मम शक्तिः, अथापि भवत्कटाक्षबलेन यथाशक्ति यते' इत्युक्त्वा वार्तिककरणाय प्रववृते ॥

अत्रान्तरे पद्मपादान्तरङ्गभूताः चित्सुखाचार्यप्रभृतयः रहसि गुरुवरमेवं निवेदयामासुः—'भो स्वामिन्, नाविज्ञातं भवतः किंचिदस्ति । अयं च विश्वरूपाचार्यः महाकर्मठः । भट्टपादस्य शिष्योऽयमत्यन्तं तदीयसिद्धान्तेऽभिनिविष्टचेताः सन् संन्यासशास्त्रस्य अर्थवादतां अन्धपङ्ग्वादिविषयतां च समर्थितवान् । सर्वलोकप्रसिद्धं परमेश्वरमपि निराकृतवान् । भिक्षोः गृहस्यान्तः प्रवेशमपि न दत्तवान् । यद्यपि इदानीमयं संन्यासी अथापि वादे पराजयेन प्रतिज्ञापालनाय गत्यन्तराभावात् तुरीयाश्रममाश्रितवान् । अतो भाष्यस्य व्याख्यां कर्तुमनुज्ञा दीयेत चेत् सर्वस्यापि कर्मपरतां स्थापयेत् । यदि वार्तिक-

निबन्धनं कारयितुमिष्टं, तत्रास्ति पद्मपादः प्रथमशिष्यः ब्रह्मचर्यादेव पारिव्राज्यं स्वीकृतवान् । पूर्वं सर्वेष्वपि शिष्येषु परतीरस्थेषु सत्सु भवता आहूतास्ते सर्वेऽपि नावमन्विष्याधावन् । अयं तु भवदीयचरणभक्तिमेव नौकां विधाय गङ्गायामवातरत् । तदा जाह्नव्या प्रदर्शितेषु पद्मेषु पादौ विन्यस्य भवदन्तिकमागतः । एतादृशोऽर्हति वार्तिकनिबन्धनाय । अयं हस्तामलकोऽपि अत्र अधिकारी भवितुमर्हति । यदीयानि पद्यानि हस्तामलकवत् औपनिषदमद्वैतराद्धान्तं सम्यगावेदयन्ति । अत एव तुष्टेन भवता तदेव नाम कृतम् ।' इति ।

एतदाकर्ण्य गुरुवरो हस्तामलकमधिकृत्येत्थं प्रस्तौति स्म — 'अस्य तावत् बालक्रीडा वा, अक्षराभ्यासो वा, उपनयनं वा, वेदाध्ययनं वा, चाटुवचनं वा, किमपि नासीत् । बाल्यप्रभृति अयं आत्मस्वरूपे एव मग्नमानस आसीत् । तदज्ञानेनायं भूतोपहत इति निश्चित्यास्य पिताऽस्मत्सकाशमानीतवान् । कस्त्वमित्यस्माभिः पृष्टश्च तदैव मौनं विहाय प्रकटितवानात्मतत्वम् । तत् श्रुत्वा तत्पितापि अत्रैव वासार्होऽयं इत्युक्त्वा तं विसृज्य गतवान् । एवमाबाल्यात् आत्मविलीनचेतसोऽस्य कथमेतादृशमहाप्रबन्धनिर्माणे बुद्धिः प्रवर्तेत' इति ॥

श्रुत्वा चैतत् शिष्यगणाः पप्रच्छुः — 'स्वामिन् , विना श्रवणादिभिरुपायैरयं कथमात्मतत्त्वं विदितवान्' इति । गुरुस्तदीयं

वृत्तान्तं सर्वमप्यवदत्— 'पुरा कश्चित् सिद्धः यमुनातीरे वसति स्म । एकदा काचित् विप्रकन्या द्विहायनं स्वीयं बालकं तत्समीपे निवेश्य 'क्षणं शिशुं प्रतीक्षस्व' इत्युक्त्वा सखीभिः सार्धं स्नानार्थं गता । समाधिनिष्ठश्चायं योगिपुंगवो न ज्ञातवान् । बालकश्च दैववशात् चंक्रम्यमाणः नद्यां पपात । मृतस्य शिशोः शरीरं नदीतीरे दृष्ट्वा तद्बन्धवः सर्वेः पुरतः उच्चैः क्रन्दन्ति स्म । समाधेर्व्युत्थितश्च मुनिः तदाक्रोशमसहमानः करुणापरवशहृदयः योगमहिम्ना शिशोः शरीरं प्रविवेश । तादृशशिशुरेवायं हस्तामलको नाम । एतावन्तं कालं जनसङ्गभिया जडवदासीत् । अनेनाविदितं किमपि नास्ति, अथापि सदा अन्तर्मुखमिमं बहिर्मुखमाध्यग्रन्थकरणे प्रेरयितुं न शक्यम् । विश्वरूपस्तु सर्ववित् सरस्वत्यापि श्लाघितविज्ञानः ग्रन्थकरणे शक्तः । स चेत् भवद्भ्यो न रोचते नान्यं पश्यामः । न च बहुसंमतं कार्यं कारयितुमिष्टम् । अस्ति सनन्दनः सर्वानन्दनः भवतामपि संमतः । स तु वार्तिकं विहाय भाष्यस्यान्यां व्याख्यां करोतु । वार्तिकं तु विश्वरूपेण प्रतिज्ञातं' इति शिष्यान् आदिदेश ॥

ततः गुरुः रहसि सुरेश्वरमाहूय 'भवतः पूर्ववासनाबलेन भाष्यस्य कर्मपरतानयनशंकया न वार्तिकनिबन्धनं सहन्ते एते शिष्याः । अतः संप्रत्ययः सर्वेषां यथा स्यात् तथा स्वतन्त्रग्रन्थमेकं अध्यात्मविषयं विरचय' इत्युवाच । सुरेश्वरोपि गुर्वाज्ञया अचिरादेव नैष्कर्म्यसिद्धिनामकं ग्रन्थमेकं विधाय प्रदर्शयामास ।

आचार्योऽपि तं समग्रमवलोक्य परितुष्टचेताः अन्येभ्योऽपि शिष्येभ्यः दर्शयामास। तेऽपि दृष्ट्वाऽतीव विश्वासमापन्नाः नास्त्यन्यः सुरेश्वरसमः तत्त्ववित् इत्यपि प्रतिपन्नाः। पुनरपि गुरुवरः सुरेश्वराचार्यस्य बुद्धिनैपुण्यं ग्रन्थनैपुण्यं च आलोक्य नाभूत्किल शारीरकभाष्यस्य वार्तिकं सुरेश्वरकृतं इति जातमपि सन्तापं स्वयमेव शमयन् तैत्तिरीयकभाष्यस्य बृहदारण्यकभाष्यस्य च वार्तिकं कारयित्वा, पद्मपादटीकामध्ये पञ्चैव पादा प्रसिद्धा भवेयुः, तत्रापि सूत्रचतुष्टयमेव नितराम्। भवांस्तु प्रारब्धकर्मवशात् भुवि वाचस्पतिमिश्रो भूत्वा भाष्यस्य भव्यां टीकां विधास्यति। सा च आभूतसंप्लवं जीयात् इत्यनुजग्राह। अन्यकृतमपि वार्तिकं अप्रसिद्धं भवेत् इति सुरेश्वरशापोऽपि जातः। पद्मपादाचार्यः भाष्यस्य टीकां विधाय दर्शयामास। एवमानन्दगिर्यादयः गुर्वाज्ञया अध्यात्मग्रन्थान् रचयामासुः। एवं शिष्यगणाः श्रीदेशिकानुज्ञया अद्वैतपरान् बहून् ग्रन्थान् विरचय्य गुरुदक्षिणारूपेण समर्पयामासुः॥

॥ चतुर्दशसर्गकथा ॥

ततः कदाचित् पद्मपादाचार्यः तीर्थयात्रायां अतीव बद्धादरः गुरोरनुज्ञां प्रार्थयामास। तदानीं गुरुवरः एवमुवाच— 'गुरुसमीपवास एव क्षेत्रवासः, तत्पादसलिलसेवनमेव तीर्थसेवनं, गुरूपदेशेन तत्त्वदर्शनमेव सर्वदेवतादर्शनं। अतः

शुश्रूषणेन गुरुसमीपस्थितिरेवोचिता, नातोऽन्यत्र गमनम् । किञ्च कुत्राचित् जलसौकर्यं क्वचित् तदभावः स्यात् । एवं शयनस्थलमपि क्वचित्स्यात् क्वचिन्न । तदुभयान्वेषणश्रमोऽपि पान्थस्य भूयान् स्यात् । किञ्च पथिकस्य ज्वरातिसारादिरोगाश्च सुलभतया स्युः । रोगपीडितश्च स्थातुं गन्तुं वा न शक्नोति । अशक्तं च सहायभूता अपि कदाचित् विमुञ्चेयुः । किञ्च स्नानं देवतार्चनं समाधिर्वा न यथाकालं यथोचितं स्यात् । अशनं वा मित्रसमागमो वा दुस्संपादः" । इति ॥

तदानीं पद्मपादः 'श्रीमतां समीपस्थित्यैव सर्वं संपद्येत, नास्ति तत्र संदेहः । अथापि नानादेशतीर्थक्षेत्रदर्शनमेवनकुतूहला-कुलं मम मानसम् । किंच, मार्गे यद्यपि जलाद्यलाभेन श्रमः स्यात् अथापि तत् सोढव्यमेव । न हि अनायासेन कश्चिदपि पुण्यं लभते । किंच पूर्वजन्मार्जितं दुष्कृतमेवास्मिन् जन्मनि सर्वेषां प्राणिनां तदा तदा दुःखं जनयति । तच्च न केनापि कुत्रापि निवारयितुं शक्यम् । यात्रायां च शौचादिनियमस्य संकोचः स्मृतिकारैरुपदिष्टः । यात्रया तत्र तत्र निवसतां साधूनां विदुषां च संगो भवेत् । सत्संगश्च श्रेयःसाधकः । अतः अनुमतिर्दातव्येति प्रार्थयामास ॥

तदानीं गुरुवरः, 'यद्यस्ति तवातिमात्रं कुतूहलं तीर्थ-यात्रायां तर्हि मास्तु तत्रान्तरायलेशोऽपि । तव चित्तस्थैर्यपरीक्षार्थ-

